श्री. गङ्गाते पुरुषोत्तम शर्मणे उपहृतं

भगवद्विभूति ग्रन्थमालायाः, द्वितीयं रत्नम्—
देशकाल जिज्ञासायाम्

गोलविद्यासहितं,

# गोलसूत्रम् ।

महामहोपाध्याय श्रीमुरलीधर झा
दिभिर्मान्यैरनुमोदितम् ।

काशीस्थ मान्य पण्डित मण्डली प्रेरितेन

साहित्याचार्य व्याकरणतीर्थ

श्रीतारादत्त पन्तेन विरचितम्

शोधितं, प्रकाशितञ्च ।

श्रीरामेश्वर पाठकेन तारा यन्त्रालये मुद्रितम् ।



प्रथमवार १००० ] [ मूल्यम् अष्टाणकाः

# भूमिका ।

यह तो सब हिन्दू जाति को विदित ही है कि हम लोग सबही कार्यो में सङ्कल्प से लेकर तीर्थ यात्रा तक धार्मिक और व्यावहारिक विषयों में देश काल के स्मरण के विना आगे नहीं चल सकते। सङ्कल्पादि में 'जम्बूद्वीप, भारतवर्ष, आर्यावर्त्त, ब्रह्मावर्त्त मानसखण्ड, काशी खण्ड, दशार्ण, विन्ध्यपृष्ठ इत्यादि नाम लिया करते हैं और काव्यकोश व्याकरण पढ़ाते हुये बहुत से देशों के नाम पड़ते हैं। कथा वाचते हुये सैकडों देशो के नाम वांच जाते हैं।

परन्तु कोई पूछै की जिस देश का नाम आप संस्कृत में पढ़ गये हैं उसका नाम आज कल क्या कहा जाता है। और वह देश कहां है, कितना है। तब चुप रहना पड़ता है। या तो प्रतारणा का शरण लेना पड़ता। अतः इस त्रुटि को दूर करने के लिये यह ग्रन्थ रचा गया है।

इसके परिहार पाद में 'भूमेरर्द्धं जम्बूद्वीपः' इसका जो खण्डन किया उसे ध्यान देकर पढ़िये कि एशिया को जम्बूद्वीप मान कर शास्त्रसिद्धान्त व्याघात करनेवालों का खण्डन है न कि सौम्यगोलो जम्बूद्वीपः, इसका—

आप इसे ध्यान देकर पढ़िये और शास्त्र से लोक से मिलाइये। जो कुछ न्यूनता हो मुझे सूचना दीजियेगा।

यही मैं बार २ प्रार्थना करता हूँ। आपका—

पता—तारादत्त पन्त साहित्याचार्य व्याकरणतीर्थ
सार्वभौमकार्यालय, भिखारीदास की गली काशी।

# शुद्धि पत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| [illegible] | ६ | सत्विकी | सात्विकी |
| [illegible] | १४ | ऽकाशः | ऽऽकाशः |
| १३ | २ | बहवोप | बहव-उप |
| १४ | ३ | पञ्च सहस्र | कु, नाग, शर, भू |
| २३ | ८ | द्वितीया | द्वितीय |
| २५ | ६ | शतोंगु | शतोगु |
| २६ | ४ | सरय्याः | सरय्वोः |
| २६ | २५ | पष्ठा | पृष्ठ |
| ३१ | ६ | गोकरो | गोकर्णौ |

पं० श्रीतारादत्तपन्त साहित्याचार्य और व्याकरणतीर्थ के बनाये हुये गोलविद्या और गोलसूत्र इन दोनों को मैंने देखा ।

ये दोनों सर्वसाधारण के लिये तो परमोपकारी हैं हीं । किन्तु मेरे जानने से विशिष्ट विद्वानों के भी, रोचक होने के कारण दर्शनीय हैं ।

महामहोपाध्याय श्रीमुरलीधरझा
ज्यौतिषशास्त्राध्यापक
गवर्नमेन्ट संस्कृत कालेज, बनारस ।

# सूर्यवंशः।

| | | | | |
|---|---|---|---|---|
| १ वैवस्वतः | १७ वर्हणाश्वः | ३३ सुदेवः | ४९ सुदासः | ६५ नभः ( नलः )[१] |
| २ इक्ष्वाकुः | १८ कृशाश्वः | ३४ विजयः | ५० मित्रसहः(सौदासः | ६६ पुण्डरीकः |
| ३ विकुक्षिः (शशादः) | १९ सेनजित् | ३५ भरुकः | ५१ अश्मकः | ३७ क्षेमधन्वा |
| ४ ककुत्स्थः(पुरञ्जयः) | २० युवनाश्वः | ३६ वृकः | ५२ मूलकः नारीकवचः | ६८ देवानीकः |
| ५ अनेनाः | २१मान्धाता(त्रसद्दस्युः) | ३७ वाहुकः | ५३ दशरथः | ६९ अनीहः |
| ६ पृथुः | २२ पुरुकुत्सः | ३८ सगरः | ५४ ऐडविडः | ७० पारियात्रः |
| ७ विश्वरन्धिः | २३ त्रसद्दस्युः | ३९ असमञ्जसः | ५५ विश्वसहः | ७१ वलः |
| ८ चन्द्रः | २४ अनरण्यः | ४० अंशुमान् | ५६ खट्वाङ्गः | ७२ स्थलः |
| ९ युवनाश्वः | २५ हर्यश्वः | ४१ दिलीपः | ५७ दीर्घवाहुः (दिलीपः | ७३ अर्कः |
| १० शावस्तः | २६ अरुणः | ४२ भगीरथः | ५८ रघुः | ७४ वज्रनाभः |
| ११ वृहदश्वः | २७ त्रिबन्धनः | ४३ श्रुतः | ५९ अजः | ७५ खगणः |
| १२ कुवलयाश्वः | २८ त्रिशङ्कुः | ४४ नाभः | ६० दशरथः | ७६ विधृतिः |
| १३ धुन्धुमारः | २९ हरिश्चन्द्रः | ४५ सिन्धुद्वीपः | ६१ रामचन्द्रः | ७७ हिरण्यनाभः |
| १४ दृढाश्वः | ३० रोहितः | ४६ अयुतायुः | ६२ कुशः | ७८ पुष्यः |
| १५ हर्यश्वः | ३१ हरितः | ४७ ऋतुपर्णः | ६३ अतिथिः | ७९ ध्रुवसन्धिः |
| १६ निकुम्भः | ३२ चम्पः | ४८ सर्वकामः | ६४ निषधः | ८० सुदर्शनः |

टिप्पणी—इक्ष्वाकूणामियं भूमिः, सशैल जल कानना। १ नैषधकाव्यका नल चन्द्रवंशी है।

| | | |
|---|---|---|
| ८१ अग्निवर्णः | ९८ वाहिनीपतिः | ११५ शाकः |
| ८२ शीघ्रः | ९९ सहदेवः | ११६ शुद्धोदः |
| ८३ मरुः | १०० वृहदश्वः | ११७ लाङ्गलः |
| ८४ प्रसुश्रुतः | १०१ भानुभान | ११८ प्रसेनजित् |
| ८५ सन्धिः | १०२ प्रतीकाश्वः | ११९ क्षुद्रकः |
| ८६ अमर्षणः | १०३ सुप्रतीकः | १२० रणकः |
| ८७ महस्वान् | १०४ मरुदेवः | १२१ सुरथः |
| ८८ विश्वसाह्वः | १०५ सुनक्षत्रः | १२२ सुमित्रः |
| ८९ प्रसेन-जित् | १०६ पुष्करः | गोल एष मनुवंश्यभू- |
| ९० तक्षकः | १०७ अन्तरिक्षः | भुजाम् ,सङ्घितः कलि- |
| ९१ वृहद्बलः | १०८ सुतपाः | सहस्रकावधि । |
| ९२ वृहद्रणः | १०९ अमित्रजित | इति सूर्यचरिते । |
| ९३ उरुक्रियः | ११० वृहद्राजः | यावत्सूर्यउदेतिस्म, |
| ९४ वत्सवृद्धः | १११ वर्हिः | यावदस्तं समेतिच । |
| ९५ प्रतिव्योमः | ११२ कृतञ्जयः | सर्वन्तद्यौवनाश्वस्य, |
| ९६ भानुः | ११३ रणञ्जयः | मान्धातुः क्षेत्रमुच्यते ।। |
| ९७ दिवाकः | ११४ सञ्जयः | इति भागवते । |

इनका इतिहास हिन्दी में बनता है ।



# ॥ अथ गोलविद्या ॥

ईश्वरस्य कृतौ गोला, अनन्ताः परिकीर्त्तिताः ।
अनन्ता रविविष्णवीश,-ब्रह्माणस्तत्प्रवर्तकाः ॥ १ ॥
देशः सूर्यकराक्रान्तो, गोलशब्देन कथ्यते ।
भूगोलश्च खगोलश्च, स द्विधा परिकीर्त्यते ॥ २ ॥
यावद्दिवाकरकराः प्रसरन्ति जगत्त्रये ।
तावत्स एको गोलः स्यादेकार्ककिरणोज्ज्वलः ॥ ३ ॥
द्वेधा स एष दिनरात्रिगतेर्विभागात् ।
सूर्यस्य, पूर्वपर-गोल-इतीहया नः ।
पूर्वेऽस्ति भूरिवसुधा परगोलके तु
खण्डत्रयं भवति तद्ध्रुवतोऽप्युदीच्याम् ॥ ४ ॥
उच्चैस्थानं गता यूयं, सर्वतः परिपश्यत ।
उदयादस्तपर्य्यन्तम्, गोलार्द्धं पूर्वसंज्ञितम् ॥ ५ ॥
यावद्भवन्तः पश्यन्ति, गगनं गोल-मापकम् ।
तावदेव हि पश्यन्ति कुरुस्थाः पश्चिमार्द्धकम् ॥ ६ ॥
जम्बूद्वीपो मिलित्वाऽयं, सर्व एव प्रकीर्त्तितः ।
नव-खण्डयुतो मेरुकर्णिको मुनिभिः स्मृतः ॥ ७ ॥
अन्ये द्वीपास्तु षट् सूक्ष्मा, मनुजानामगोचराः ।
वर्णितास्त्वेकरूपेण, पुराणेष्वत एव हि ॥ ८ ॥
जम्बूद्वीपस्य मध्ये यन्मेरुर्मुनिभिरिष्यते ।
अर्द्धं भूमेः, एशिया, वा जम्बूद्वीपः कथंभवेत् ॥ ९ ॥
यद्भूभागाद्ध्रुवो मूर्द्धनि, उपरिस्थः प्रदृश्यते ।
सभूभागो ध्रुवः ख्यात उपचारान्मनीषिभिः ॥ १० ॥

स एव मेरुः कथितो, दिव्यदृग्भिर्महर्षिभिः ।
सर्वस्मादुत्तरत्वात्तु, दूरादुच्चैस्तरस्तु सः ॥ ११ ॥
मेरोश्चतुर्दिशमिला,—वृतवर्षमाहुः ।
खण्डत्रयन्तत उदक् त्रयमाहुरर्वाक्
एकं पुरः परत एकमुदाहरन्ति ।
एवं वदन्ति नवभागयुतान्धरित्रीम् ॥ १२ ॥
इलावृतादुत्तरतो रम्यकश्च हिरण्मयः ।
कुरुश्चेति क्रमाज्ज्ञेयाः खण्डा गोलार्द्धकेपरे ॥ १३ ॥
षट्खण्डाः पूर्वगोलार्द्धे भारतं किन्नरो हरिः ।
भद्राश्वकेतुमालौ च भूमेः खण्डा अमी नव ॥ १४ ॥
'यूरालात्, पश्चिमो भागो (यूरोपः) केतुमालकः ।
भद्राश्वश्चीन-इत्युक्तः, षट्-खण्डाः क्रमतो द्वयोः ॥ १५ ॥
आष्ट्रेलिया, आफ्रिकाच पूर्वगोलस्य याम्यगौ ।
उपद्वीपौ समग्रस्य महाद्वीपावपि स्वयम् ॥ १६ ॥
एवं सिंहल,जापान,-इङ्लैण्डाद्याः समे तथा
निविष्टा पूर्वगोलार्द्धे, जम्बूद्वीपोपगा अमी ॥ १७ ॥
अर्वाग् विषुवरेखाया नक्ररेखार्द्धितः स्वयम् ।
आष्ट्रेलिया महाद्वीपो मरुमध्यस्त्रिधाप्यतः ॥ १८ ॥
दक्षिणोत्तरभेदेन, द्विविधाचाऽऽफ्रिका मता ।
विषुवद्रेखया भिन्ना न समुद्रविभाजिता ॥ १९ ॥

---

१ हिमालयाद्दक्षिणभागः पूर्वी, चीनतः 'टर्की इन्नएशिया, पर्यन्तं भारतवर्षम्१। मैंगोलिया-चीनीटर्किस्तान टर्किस्तान-इतित्रिधाविभक्तं किन्नर वर्षम्२। रूस-इति प्र० हरिवर्षम् । सैबेरिया ग्रीनूलेण्डभागौ-इलावृतम्३। उत्तर-अमेरिकाया उत्तरोभागः, रम्यक वर्षम् ।४ दक्षिणभागो हिरण्मयवर्षम्५। दक्षिणाऽमेरिका-कुरुवर्षम् ।६

एवं परस्मिन् गोलेऽपि, दक्षिणोत्तरभेदतः ।
अमेरिका, द्विधा भिन्ना, रेखावारिधि योगतः ॥ २० ॥
अर्द्धगोले प्राक्-परस्तात्, रेखा या विषुवत्स्मृता ।
सिद्धैरंशैरुदगवाक् ततोऽयनरेखिके ॥ २१ ॥
दक्षिणायनरेखा या, कर्करेखा तु विन्ध्यगा ।
उत्तरायणरेखा तु नक्ररेखा ऽऽफ्रिकोदरे ॥ २२ ॥
दक्षिणाभिमुखे सूर्ये कर्कतो दक्षिणायनम् ।
उत्तराभिमुखे सूर्ये नक्रतस्तूत्तरायणम् ॥ २३ ॥
मध्यरेखागते सूर्ये समं रात्रिन्दिनं भवेत् ।
सन्निधानेन सूर्यस्य मध्येऽयनरेखयोः ॥ २४ ॥
यस्य सन्निहितः सूर्यः समूर्द्धोपरि पश्यति ।
विप्रकृष्टस्तु यस्य स्यात्स तीर्यङ्ङीक्षते च तम् ॥ २५ ॥
मस्तकोपरि पश्यन्ति विस्तीर्णं गगनञ्जनाः ।
तिर्यक् पश्यन्ति संकीर्णं वृत्तत्वाद्भू-खगोलयोः ॥ २६ ॥
अत एव दिनं दीर्घं मस्तकोपरि गच्छतः ।
सवितुश्चलतस् तिर्यक् क्रमाद्-ह्रस्वं दिनं भवेत् ॥ २७ ॥
ध्रुवसन्निहिते देशे सदा दूरस्थितो रविः ।
रात्रिं विधत्ते विपुलां कर्करेखागतो दिनम् ॥ २८ ॥
कर्करेखागते सूर्येऽगस्त्यपार्श्वे निशा मता ।
मकरे ध्रुवपार्श्वे तु, विषुवे समता तयोः ॥ २९ ॥
गोलमध्ये स्थिता लङ्का तत्र रात्रिंदिवं समम् ।
सदैव भवती,दानीं जलमेवाऽत्र विद्यते ॥ ३० ॥
विषुवद्रेखया भिन्नः, पुनर्गोलो द्विधा मतः ।
सौम्य-याम्य-विभेदेन, सौम्ये भूरिधरा स्थिता ॥ ३१ ॥

मेषादितः सौम्य-गोल-स्तुलादिर्याम्य-गोलकः ।
खगोलो रविगत्यैव विभक्तस्तादृशः परः ॥ ३२ ॥
खगोलस्यैव रेखाभिः सान्निध्यादुपचारतः ।
भूगोलेऽव्यवहारोऽयं सर्वो रेखादिना कृतः ॥ ३३ ॥
पुनर्गोलो द्विधा भिन्नो दक्षिणोत्तर-रेखया ।
एवं चतुर्धा भिन्नोऽयं नवत्यंशैस्त्रिराशिगैः ॥ ३४ ॥
गोले पूर्वापरा रेखा मध्यस्था विषुवं मता ।
तथा याम्योत्तरा विज्ञैरक्षरेखा प्रकीर्तिता ॥ ३५ ॥
नवत्यंशाः पुरः पश्चात्ततो देशान्तरं मताः ।
एवं गोल द्वये ज्ञेयं षष्ट्युत्तर-शतत्रयम् ॥ ३६ ॥
याम्योत्तराणि वृत्तानि षष्ट्युत्तर-शतत्रयम् ।
गोले भवितुमर्हन्ति ध्रुवप्रोतानि विस्तृतम् ॥ ३७ ॥
देशान्तराणि तावन्ति गोले ज्ञेयानि मानवैः ।
त्रिंशत्क्रोशैः सपादैस्तु भूमौ देशान्तरं मतम् ॥ ३८ ॥
अक्षांशरेखाः संछिन्ना वृत्तैर्याम्योत्तरैर्यतः ।
स्ववर्गसम्मितान्देशान् विभजन्ते समाः समैः ॥ ३९ ॥
अहोरात्रेण गोलञ्चेत् क्रामते भगवानयम् ।
दशभिर्विकलाभिः स देशाद्देशान्तरं व्रजेत् ॥ ४० ॥
षट्त्रिंशच्छत-तुल्यास्तु पला, षष्टि-कला यतः ।
भक्ता देशान्तरैर्लब्धि दद्यादश-पलात्मिकाम् ॥ ४१ ॥
मनुष्यस्त्वेकघस्रेण देशाद्देशान्तरं व्रजेत् ।
वर्षेण गोलं परियन् पुनः प्राप्नोति स्वं गृहम् ॥ ४२ ॥
इति श्रीगोलविद्यायां सामान्यतो गोलनिरूपणम् । प्र० प्रक०
अथ लेखनरीतिञ्च हृदि धारय कोविद ?
ध्रुवद्वयगता रेखा या लङ्कास्पर्शिनी भुवः ॥ १ ॥

मध्यरेखा तु सा तस्याः प्राक्पश्चाद्देश-संस्थितिम् ।
निरक्षदेशे लङ्कायां विन्दुं न्यस्य प्रकल्पयेत् ॥ २ ॥
नवत्यंशान् पुरः पश्चादेवं गोलद्वये न्यसेत् ।
अवागुदक् तथाक्षांशान् कल्पयेद् गोलवित् स्वयम् ॥ ३ ॥
इङ्गलैण्ड,-स्थाद् ग्रनिच्, स्थानात्पाश्चात्यैः कल्पितं यथा ।
तथा भूमध्यरेखातः सर्वं कल्प्यं मनीषिभिः ॥ ४ ॥
मध्यरेखा भारतेतु मुनिभिः कीर्तिता यथा ।
"तत्वेन्दुयोजनैर्लङ्का-देवकन्यन्तरं स्मृतम् ।
तस्याः स्वामी खनागैस्तु विंशत्या सागरः स्मृतः ॥ १ ॥
वत्स-गुल्मस्ततो दिग्भि-रुज्जयन्यभ्रपञ्चभिः ।
कुरुक्षेत्रं खनागैस्तु सुमेरुस्तत्वपन्नगैः" ॥ २ ॥
इति माने महान् भेदो भूचित्राद्वर्त्तमानकात् ॥ ५ ॥
निरासनीयः सन्देहो दैवज्ञप्रवरैस्ततः ।
निरक्षदेशो, लङ्केयम्, सिंहलस्था तु रक्षसाम् ॥ ६ ॥
भूचित्रं कारयिष्यामि पूर्वोक्तं शास्त्र-सम्मतम् ।
देशाक्षचक्रे लेखयिष्ये रेखातः प्राक् परस्थितान् ॥ ७ ॥
इति श्रीतारादत्त-पन्तविरचिते गोले द्वितीयं प्रकरणम् ॥

अथ वर्षपर्वताः—

निषधो माल्यवान् नीलो गन्धमादन-पर्वतः ।
इलावृतस्य क्रमशो ह्यवाक् पश्चादुदक्पुरः ॥ १ ॥
नीलः श्वेतः शृङ्गवांश्चगताः पश्चिमगोलके ।
वर्षाणां रम्यकादीनां क्रमादुत्तरतः स्थिताः ॥ २ ॥
निषधो हेमकूटश्च हिमवान्पूर्वगोलके ।
हरि-किन्नर-नाम्नीनां क्रमादुत्तरतः स्थिताः ॥ ३ ॥
माल्यवान् पर्वतो यस्तु केतुमाल-विभाजकः ।
गन्धमादननामा तु भद्राश्वस्य विभाजकः ॥ ४ ॥

अथ सुमेरुः—

सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः, ।
इत्येवं नियमाद्वित्त मेरुं भूगोल-कर्णिकाम् ॥ ५ ॥
सुरालयः सुवर्णाद्रिर्मनुष्याणामगोचरः ।
मुनिभिर्वर्णितस्तस्मान्न मृत्पाषाण-पिण्डकः ॥ ६ ॥
सुमेरुशिखरे गङ्गा चतुर्धा जायते ततः ।
गिरिं गिरिं लङ्घयन्ती हिमाद्रिं भारतं, तथा ॥ ७ ॥
भद्राश्ववर्षं सीता च गन्धमादन पर्वतात् ।
माल्यवत्पर्वताच्चक्षुः केतुमालं तथा गता ॥ ८ ॥
शृङ्गवत्पर्वताद् भद्रा, यात्युत्तरकुरूँस्तथा ।
ब्रह्मलोकादागताया गङ्गाया विभजिर्यतः ॥ ९ ॥
सुमेरुशिखरे प्रोक्ता सा सूक्ष्मा नात्र विस्मयः ।
प्रत्यक्षा त्वस्मदादीनां मर्यादागिरिषु स्मृता ॥ १० ॥

तथा च विष्णुपुराणे—

भरताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ।
पत्राणि लोकपद्मस्य मर्यादाशैलवाह्यत—इति ॥
पूर्वोक्तांश्चतुरो विद्धि मर्यादा-गिरिनामकान् ।
यस्मादलौकिकञ्चापि पुराणेषु समीरितम् ॥ ११ ॥
लौकिकाऽलौकिकत्वेन द्विधा सृष्टिः प्रकीर्तिता ।
लौकिका सर्वप्रत्यक्षा योगिगम्या त्वलौकिका ॥ १२ ॥
एवं प्लक्षादयो द्वीपा ब्रह्माण्डाऽऽवरणात्मका ।
पृथिवी-जल-तेजांसि वाताऽऽकाशाऽवहङ्कृतिः ॥ १३ ॥
महत्तत्त्वं प्रधानञ्च ब्रह्माण्डावरणानि हि ।
पूर्वोव्याप्यो व्यापकस्तु परो यस्मादतः स्मृतम् ॥ १४ ॥

उत्तरोत्तरमेतेषां माने दशगुणाधिकम् ।
चैतन्याधिष्ठितं सर्वं ध्येयत्वेन निरूपितम् ॥ १५ ॥
विराट्स्वरूपं ब्रह्माण्डं सत्यान्तं मुनिभिः स्मृतम् ।
सूर्यप्रकाशो गोलस्तु महर्लोकान्तमेव हि ॥ १६ ॥
जनस्तपः सत्यलोकाः स्व-प्रकाशाः समीरिताः ।
पाताललोकाः पृथवी-पुटानीति निरूपितम् ॥
नागादिवासो मणिभिः प्रकाशस्तेषु कीर्त्तितः ॥ १७॥ ॥

इति प्रकीर्णप्रकरणम् ।

## अथ भूसन्निवेशः ।

सर्वोन्नतो हूणदेशो, हिमाद्रेरुत्तरे स्थितः ।
दिविष्ठ इति-विख्यात, स्ततो नद्यस्तु सर्वतः ॥१॥
चीनः प्राक्प्रवणास्तत्र, रीता ख्याता महानदी ।
मैङ्गोलिया चतुर्दिक्षु, पर्वतैर्वेष्टितस्ततः ॥ २ ॥
उदग् वहाः प्रवाहाः स्युः, हरिवर्षादिलावृते ।
ध्रुव-सन्निहिते देशे, सागरेण मिलन्त्यमी ॥ ३ ॥
चक्षुः प्रभृतयः केतु-माले नैर्ऋत्य-कोणगाः ।
हिरण्मये रम्यके च प्रवाहा दक्षिणा-मुखाः ॥ ४ ॥
उत्तरेषु कुरुष्वेवं भद्रा पूर्वमुखा नदी ।
भू सन्निवेशो बहुधा विपर्यस्तः प्रतीयते ॥ ५ ॥
विचारशीला जानन्ति विलासं प्रकृतेर्नवम् ।
शेषंनिरूपयिष्येऽथ तत्तद्वीपनिरूपणे ॥ ६ ॥

इति भूसन्निवेश-प्रकरणम् ।

अथ पर्वताः ।

पर्वतास्तु त्रिधा भूमौ सौम्या आग्नेयकाः समाः ।
शीताः सौम्यास्तापकरा आग्नेयाः शेषकाः समाः ।
हिमेनाच्छादिताः सौम्याः तरुच्छन्नाः समामताः ॥ १ ॥
शिलोच्चया स्तापकरा विन्ध्य-पूर्वादि-पर्वताः ।
उदग्विषुवरेखाया नवांशै र्मलयो गिरिः ॥ २ ॥
द्वाविंशांशाद्विन्ध्यगिरिः सप्तविंशाद्धिमालयः ।
हिमालयो घर्घरान्तो गिरिः पूर्वापरायतः ॥ ३ ॥
वायव्याभिमुखस्तस्मात्कश्मीरान्तं गतो महान् ।
व्याप्तमेकादशांशेषु दिविष्ठोत्सङ्गशोभिना ॥ ४ ॥
उच्चैः पर्वतराजेनाऽलौकिकं भूतलं कृतम् ।
दक्षिणाऽमेरिकास्थोऽपि शृङ्गवानुन्नतो गिरिः ॥ ५ ॥
याम्योत्तरायतश्चत्वारिंशन्नल्वोऽस्य कूटकः ।
विषुवत्सविधेऽप्यस्मिन् हिमोऽस्तीति न विस्मयः ॥ ६ ॥
त्रिंशन्नल्वोच्छ्रितः क्वापि गिरिर्हिम-युतोभवेत् ।
हिमालयस्य कूटस्तु पञ्चाशन्नल्वकोन्मितः ॥ ७ ॥
ऐव्रिष्ट, कूट-इत्युक्तस्तन्नाम्ना यापितो यतः ।
निरूपयिष्ये ऽन्यान् कूटान् भारतस्य निरूपणे ॥ ८ ॥

इति पर्वत-सामान्य-प्रकरणम् ।

(इति श्रीतारादत्तपन्त विरचितायां गोलविद्यायांप्रथमोऽध्यायः)



# अथ गोलसूत्रम् ।

नमो विराट्स्वरूपाय ।

अथ गोलं निरूपयिष्यामः ॥१॥ ईश्वरकृतावनन्ता गोलाः ॥२॥ तावन्त एव तदधिकारिणः ॥३॥ सृष्टिस्थिति-प्रलयादिप्रवर्त्तका अधिकारिणः ॥४॥ सर्वा भगवद्विभूतयः ॥५॥ राजसो हिरण्यगर्भः स्रष्टा ॥६॥ तामसो रुद्रो लयकृत् ॥७॥ सात्त्विकी सवितृमण्डलस्था मूर्त्तिः पालिका ॥८॥ सुधांशुमण्डलस्था च ॥९॥ सैषा प्रत्यक्षा ॥१०॥ पञ्चमहाभूतरूपा तु सुतराम् ॥११॥

भूमिजलतेजोवाताकाशानि भूतानि ॥१२॥ एष्वाकाश अनन्तो, नित्यश्च तार्किकाणाम् ॥१३॥ अन्ये परिच्छिन्नाः ॥१४॥ उत्तरोत्तरं दशगुणाऽधिकाः ॥१५॥ मृत्पाषाणपिण्डरूपा भूमिः ॥१६॥ गन्धवन्तः सर्वे भावाः भौमाः ॥१७॥ शीतलस्पर्शसमवेतञ्जलम् ॥१८॥ उष्णस्पर्शसमवेतन्तेजः ॥१९॥ अरूपि-स्पर्शाऽनुमेयो वातः ॥२०॥ अवकाशदाताऽऽकाशः ॥ २१ ॥

स एष भूतसङ्घ एकसूर्यकिरणाक्रान्त एको गोलः ॥२२॥ एकगोलसाक्षात्कारिणः साधारणाः ॥२३॥ गोलान्तरगामिनोऽपि मुक्ताः ॥२४॥ निरूपणीय एको गोलः ॥ २५ ॥

इति श्रीत्रिविक्रमीये गोलसूत्रे गोलपादः प्रथमः ।

अथ ब्रह्माण्डम् ॥१॥ सप्तावरणकं भगवतो विराट्स्वरूपं ब्रह्माण्डम् ॥२॥ पृथिव्यादीनि सप्तावरणानि ॥३॥ दशगुणजलाऽऽवृता मही ॥४॥ दशगुणतेजसाऽऽवृतञ्जलम् ॥५॥ दशगुणवाताऽऽवृतं तेजः ॥६॥ दशगुणाऽऽकाशाऽऽवृतो वायुः ॥७॥ दशगुणाऽहङ्काराऽऽवृतं गगनम् ॥ ८ ॥ दशगुणमहत्तत्त्वाऽभि-

व्याप्तोऽहङ्कारः ॥९॥ प्रकृतिव्याप्तं महत्तत्त्वम् ॥ १० ॥ तदेतद् ब्रह्माण्डम् ॥११॥ तदेतत् सर्वचैतन्य-व्याप्तम् ॥ १२ ॥ प्रकृत्यादिलक्षणं सांख्यतो बोध्यम् ॥१३॥ दशगुणामुपलक्षणं व्यापकत्वस्य ॥१४॥

ब्रह्माण्डव्याप्यो गोलः ॥ १५ ॥ गोलाद्बहिः सुदर्शनाऽपेक्षा ॥१६॥ भगवदनुगृहीतानां वहिः सञ्चारो नान्येषाम् ॥१७॥ सूर्यप्रकाशपर्यन्त एव गोल इत्युक्तम् ॥१८॥ अनन्त-ब्रह्माण्डनायक ईश्वरः ॥१९॥ तस्यैव स्थूलं रूपं ब्रह्माण्डम् ॥२०॥ तत्राऽनन्ता-भगवद्विभूतयः प्रत्यक्षाः ॥२१॥ तासु मुख्यः सूर्यः ॥२२॥ तद्भक्त्या निरूप्यते गोलः ॥२३॥ श्रोतव्यंतच्चरितम् ॥२४॥ ध्येयस्तन्मण्डलस्थो भगवान् ॥२५॥ जप्या तत्प्रतिपादिका सावित्री ॥२६॥ तदेतज्जन्म-साफल्यम् ॥२७॥ यदिष्यते कैवल्यम् ॥२८॥

इति श्रीत्रिविक्रमीये गोलसूत्रे ब्रह्माण्डपादो द्वितीयः ।

अथ विभागः ॥१॥ गोलो द्विविधः ॥२॥ भूगोलः खगोलश्चेति ॥ ३ ॥ पुनर्द्विधा ॥ ४ ॥ दिनावच्छिन्नो रात्र्यवच्छिन्नश्चेति ॥५॥ सोऽपि द्विधा ॥६॥ याम्यगोलः सौम्यगोलश्चेति ॥७॥ पुनरपि द्विधा पूर्वापरभेदात् ॥८॥ रेखे विभाजिके ॥९॥ गोलमध्यस्था पूर्वापरायता रेखा विषुवत्-सञ्ज्ञा ॥१०॥ दक्षिणोत्तरायता, याम्योत्तरा, (अक्षरेखा,) इत्युच्यते ॥११॥ एवं चतुर्धा विभक्तो गोलः ॥१२॥

मेषसंक्रान्त्यवच्छिन्ना रेखा विषुवम् ॥१३॥ तुलावच्छिन्ना वा ॥१४। मेषोदयतुलान्तावच्छिन्ना वा ॥१५॥ लङ्कामध्याह्नसूर्यावच्छिन्नत्वे सति ध्रुवद्वयप्रोता रेखा याम्योत्तराऽक्षरेखा॥१६॥ अनेन कालो व्याख्यातः ॥ १७ ॥ विषुवककर्कान्तरालम् ॥१८॥

कर्कविषुवान्तरालम् ॥१९॥ विषुवनक्रान्तरालम् ॥२०॥ नक्रविषुवान्तरालम् ॥२१॥ मेषादिराशित्रिकनवत्यंशचतुष्कविभक्तश्चतुर्धा गोलः कालश्च ॥२२॥

तदेतस्मिन् षष्ट्युत्तराणि त्रीणि शतानि ध्रुवप्रोतानि वृत्तानि ॥ २३ ॥ तावत्यो रेखाः पूर्वापरायताः ॥ २४ ॥ तद्वर्गमितानि देशान्तराणि ॥ २५ ॥ सपादत्रिंशत्क्रोशमितं देशान्तरप्रमाणम् ॥ २६ ॥ एकस्मिन्देशान्तरे दशभिः पलाऽभिः सूर्यसञ्चारः ॥ २७ ॥

तरणेरुदयास्तगत्याऽहोरात्रम् ॥ २८ ॥ कर्कनक्रगत्या वर्षम् ॥ २९ ॥ भूमेरिति—पाश्चात्याः ॥ ३० ॥ स्थिरस्तेषां सूर्यः ॥ ३१ ॥ इति श्रीत्रिविक्रमीये गोलसूत्रे गोलविभागपादस्तृतीयः ।

अथ विभागः खण्डानाम् ॥ १ ॥ खमध्यस्थस्तारा-विशेषो ध्रुवः ॥ २ ॥ ध्रुवसन्निहिता भूगोलकर्णिका मेरुः ॥ ३ ॥ स चाऽशीत्यक्षांशेभ्य उपरितनः प्रदेशः ॥ ४ ॥ स एव ध्रुव-इत्युच्यते बालैः ॥ ५ ॥ उपचारात् ॥ ६ ॥ तंपरित इलावृत-वर्षम् ॥ ७ ॥ खण्डो वर्षमिति पर्य्यायशब्दौ ॥ ८ ॥ स च षट्षष्ट्यक्षांशेभ्य उपरितनो देशः ॥ ९ ॥ अमानुषोऽयम् ॥ १० ॥ सैवेरिया, ग्रीनलेण्डा, दयोऽत्रान्तर्भवन्ति ॥ ११ ॥

सैवेरियापूर्वभागेऽर्द्धचन्द्राकारो निषधो वर्षपर्वतः ॥ १२ ॥ ततोऽर्वाग् हरिवर्षम् ॥ १३ ॥ संप्रति रूश, इति प्रसिद्धम् ॥१४॥ अस्याऽपरभागे माल्यवान् वर्षपर्वतो याम्योत्तरायतः ॥ १५ ॥ संप्रति यूराल,-इति व्यवह्रियते ॥ १६ ॥ तस्य परतः केतु-मालखण्डः ॥ १७ ॥ स एव यूरोप, इत्युच्यते ॥ १८ ॥ हरिवर्षदक्षिणभागे हेमकूटोवर्षपर्वतः ॥ १९ ॥

ततः किम्पुरुषखण्डः ॥ २० ॥ स चेदानीं मैंगोलिया, चीनतुरुष्क, तुरुष्कस्थानमिति त्रिधा विभक्तः ॥ २१ ॥ किम्पुरुषपूर्वतो गन्धमादनः ॥ २२ ॥ अयं प्रायो दक्षिणोत्तरायतो वर्षगिरिः ॥ २३ ॥ सच 'खिङ् गाङ्'-इत्यादिनामभिः प्रसिद्धः।

तस्य पुरस्तादिविष्ठपूर्वभागपर्यन्तं भद्राश्ववर्षम् ॥ २४ ॥ तदेव महाचीन;मञ्चूरिया; जापान; इति–व्यपदिश्यते ॥ २५ ॥ भद्राश्व-दक्षिणभागे चीनः श्यामो ब्रह्मदेशश्चेति—भारतवर्ष खण्डाः ॥ २६ ॥ किंपुरुषाद्दक्षिणे हिमालयारम्भः ॥ २७ ॥ सर्वो दिविष्ठः प्रालेयाद्रि-सम्पुटितः ॥ २८ ॥ अयं भारतस्य शिरोभागः ॥ २९ ॥ विदेशं मन्यन्ते दुर्ललिताः ॥ ३० ॥ मानसं तीर्थं कैलासधामचास्माकमस्मिन ॥ ३१ ॥ अस्य दक्षिणतो योजनोन्मानमितानि कूटानि ॥ ३२ ॥ माला च महती हिमालय-शाखानाम् ॥ ३३ ॥

ततः कुमारिका खण्डो भारतस्य मध्यो भागः ॥ ३४ ॥ हिन्दुस्थानमिति कुमारिकामात्रस्य नाम ॥ ३५ ॥ अस्य पश्चिमभागे 'सुलेमाननामा' नगः ॥ ३६ ॥ याम्योत्तरायतोऽयम् तस्मात्परं कम्बोज-पारसीक-तुरुष्काऽवराः खुरासानाभिधेया भारतभागाः ॥ ३७ ॥ इमे देशा म्लेच्छतां गता उपदेशवैधुर्य्यात ॥ ३८ ॥ अवर–दक्षिण–भागे वाहीको महाद्वीपः ॥ ३९ ॥ अयं दक्षिणोत्तरायतः ॥४०॥ विषुवरेखया मध्ये विभक्तः ॥४१॥ दक्षिणोत्तरभेदेनाऽऽफ्रिकेति प्रसिद्धः ॥ ४२ ॥ अयं गोलार्द्धस्य पश्चिमे पार्श्वे ॥४३॥ दक्षिणाफ्रिकायाः पूर्वस्यां गोलार्द्धपूर्वपार्श्वे नक्ररेखया मध्ये विभाजित आष्ट्रेलियानामको महाद्वीपः ॥४४॥

---

१ मध्ये विषुवत्सरसः ( विक्टोरिया सर ) उत्तरे भागे।

अवाग्दशभिरक्षांशैर्विषुवतः ॥ ४५ ॥ अस्योत्तरतश्चीनब्रह्मदेश-योर्दक्षिणतो बह्वोपद्वीपाः ॥४६॥ सगरात्मजैरुपक्लृप्ताः ॥४७॥ ते च सुमात्रा-सिंगापुर-जाभा-प्रभृतयः ॥४८॥

स चायं महाद्वीपोपद्वीपयुतः सर्वोभागोहिमालयपर्यन्तो भारत-खण्ड एव ॥४९॥ महान्हि भारतखण्डः ॥५०॥ भरतस्य[२] ज्येष्ठत्वात् ॥५१॥

परस्मिन्नर्द्धगोले तु भूमिरल्पा ॥ ५२ ॥ सा चामेरिकेति प्रसिद्धा दक्षिणोत्तरभेदेन द्विविधा ॥ ५३ ॥ तत्रोत्तरामेरिकाया मिलावृतानन्तरं नीलनामा-वर्ष-पर्वतः ॥ ५४ ॥ ततो रम्यकवर्षम् ॥५५॥ ततः श्वेतनामा वर्षपर्वतः ॥ ५६ ॥ ततो हिरण्मयवर्षम् ॥५७॥ ततः शृङ्गवान् वर्षपर्वतः ॥ ५८ ॥ अयं दक्षिणामेरिका-स्थो याम्योत्तरायतः ॥ ५९ ॥ ततः कुरुवर्षम् ॥ ६० ॥ उत्तर-कुरुव्यपदेशश्चास्मिन्नेव ॥६१॥ अत्र स्वल्पा उपद्वीपाः ॥६२॥

एतावाञ्जम्बूद्वीपः ॥ ६३ ॥ सृष्टिकाले सुसँल्लग्नोऽधुना तु विच्छिन्नो विपर्य्यस्तश्चेति प्रतीयते ॥ ६४ ॥ परीहारान् वक्ष्यामः ॥६५॥ सिद्धो नवखण्डात्मको जम्बूद्वीपः ॥ ६६ ॥

इति श्रीत्रिविक्रमीये गोलसूत्रे वर्ष-विभागपादः प्रथमाध्यायश्च समाप्तः ।

---

२ ऋषभदेव ज्येष्ठ पुत्रस्य भरतस्य नाम्ना प्रसिद्धं भारतं वर्षम् । न शकुन्तलासुतस्य ।

## द्वितीयोऽध्यायः ।

अत्र गणकैकदेशिनः ॥१॥ भगवच्छक्त्याऽन्तरिक्षेऽवष्टब्धः कन्दुकाकारो भूगोलः ॥२॥ सर्वतो ग्रामचैत्यपर्वतारामादिवृतः ॥३॥ तस्य व्यासः पञ्च सहस्र योजनपरिमितः ॥ ४ ॥ किञ्चिदूनो वा ॥५॥ परिधिस्त्रिगुणाऽधिकः ॥६॥ तस्य पृष्ठभागे लङ्का॥७॥ लङ्काया अधस्तात्समसूत्रे सिद्धपुरम् ॥८॥ पूर्वतो यमकोटिः॥ ९॥ पश्चिमतो रोमकपत्तनम् ॥१०॥ दक्षिणतो बडवानलः ॥ ११ ॥ उदीच्यां मेरुः ॥१२॥ गोलस्योत्तरपार्श्वे भूमेरर्द्धं जम्बूद्वीपः॥१३॥ दक्षिणतःसप्तसमुद्राःषड्द्वीपाश्च ॥१४॥ भूगोलस्य परितोभपञ्जरम् ॥१४॥अत्र पौराणिकैकदेशिनः॥१५॥ यथा पूर्वनिरूपित जम्बूद्वीपस्य कर्णिकाभूतोमेरुस्तथा भूपटलस्य जम्बूद्वीपः ॥ १६ ॥ पञ्चाशत्कोटिर्विस्तारोभूलोकः ॥ १७ ॥ लक्षयोजनविस्तारो जम्बूद्वीपः ॥१८॥ स च नव खण्डात्मकः पूर्वनिरूपित-एव॥१९॥ तं परितो द्विगुणायामः क्षारोदः ॥२०॥ तस्य सर्वतःप्लक्षद्वीपः ॥२१॥ तस्येक्षुरसोदः ॥२२॥ तस्य शाल्मलद्वीपः ॥२३॥ तस्य सुरोदः ॥२४॥ तस्य कुशद्वीपः ॥२५॥ तस्य घृतोदः ॥२६॥ तस्य क्रौञ्चद्वीपः ॥ २७ ॥ तस्य क्षीरोदः ॥ २८ ॥ तस्य शाकद्वीपः ॥ २९ ॥ तस्य दधिमण्डोदः ॥३०॥ तस्य पुष्करद्वीपः ॥३१॥ तस्य स्वादूदकः ॥ ३२ ॥ तस्य लोकाऽलोकाचलः ॥ ३३ ॥ ततः काञ्चनभूमिः ॥ ३५ ॥ ततोऽलोकः ॥३६॥ द्वीपा द्द्वीपो द्विगुणः समुद्रात्समुद्रः ॥ ३७ ॥ इयान् भूलोकः ॥ ३८ ॥ प्लक्षादिषु पञ्चसु नद्यः पर्वता वर्षाणि च सप्तसप्तैव ॥ ३९ ॥ पुष्करद्वीपे तु मध्ये वलयाकारो मानसोत्तर गिरिः ॥ ४० ॥ पराऽपरभेदेन द्वे वर्षे ॥ ४१ ॥

१ यावाँल्लोकस्तावान, अलोकः-इत्यर्थः ।

एषु द्वीपेषु पुरुषाणामायुः सहो बलमोजः स्वाभाविकम् ॥४२॥ भिन्नभिन्नाभिधानाश्चत्वारो वर्णा भगवन्तमुपासते ॥४३॥

अत्रोभयतत्वज्ञाः ॥४४॥ भक्तिप्रधानानि पुराणानि ॥४५॥ तेषु भक्त्यङ्गतया ध्येयं भगवतो रूपमेव निरूपितम् ॥ ४६ ॥ तच्च स्थूलं सूक्ष्मं चेति ॥ ४७ ॥ सूक्ष्मं सच्चिदानन्दरूपं ब्रह्म ॥ ४८ ॥ स्थूलं विराट्स्वरूपम् ब्रह्माण्डम् ॥ ४९ ॥ तदुपक्रम्य सर्वत्र व्याप्यतया गोलो निरूपितः ॥५०॥ स च पौराणिकानां दैवज्ञानां गोलविदाञ्चान्येषां समानः ॥ ५१ ॥ तथा च पुराणेषु चतुर्दलकमलाकारं लोकपद्मं निरूपितम् ॥ ५२ ॥ हिमालयः माल्यवान् ( यूराल ) शृङ्गवान् ( ऐंडीज ) गन्धमादनः ( खिङ् गाङ् ) इतिचत्वारो मर्यादागिरयश्चतुर्दिक्षु ॥ ५३ ॥ मध्ये पञ्च वर्षाणि ॥५४॥ वहिश्चत्वारः ॥ ५५ । तथा च मात्स्ये—

भरताः केतुमालाश्च भद्राश्वाःकुरवस्तथा । पत्राणि लोकपद्मस्य मर्यादाशैलवाह्यतः –इति ॥५६॥ तदेव चतुर्दलपद्माकारो नववर्षात्मको जम्बूद्वीप एव गोलः सर्वेषाम् ॥५७॥ ज्ञानभेदः ॥५८॥ गोलो गणिते लोकः पुराणे ॥५९॥ विकसितपद्माकारः पौराणिकानाम् ॥६०॥ मुकुलितकमलाकृतिर्गणकानाम् ॥ ६१ ॥ गणितलाघवार्थमित्येके ॥६२॥ विवक्षाभेदात् सर्वं भिद्यते ॥६३॥ अत एव प्रमाणाकारयोर्भेदः ॥६४॥ तस्मात् सर्वा भूमिर्जम्बूद्वीपः ॥६५॥ न भूमेरर्द्धम् ॥ ६६॥ नापि भास्कराद्याचार्यसंमतन्तत् ॥ ६७॥प्राहुरित्यरुचिसूचनात् ॥ ६८ ॥ आचार्यवर्या इत्याक्षेपाच्च ॥ ६९ ॥ नववर्षवत्त्वाज्जम्बूद्वीपस्य ॥ ७० ॥ यावदादित्यस्तपतीति गोललक्षणाक्रान्तत्वात् ॥७२॥ मेरोर्जम्बूद्वीपकर्णिकात्वेनवर्णनात्॥७३॥ तं परित इलावृतादीनां व्युत्पादितत्वात् ॥७४॥ अन्यथातदसंभवः ॥७५॥नार्द्धभूमेः कर्णिकाभूतो मेरुः ॥७६॥ अपि तु गोलस्य॥७७॥ मेरुकर्णिकोनवखण्डात्मको जम्बूद्वीपः ॥७८॥स एव गोलः॥७९॥

के तर्हि प्लक्षादयः ॥ ७९ ॥ ॥ ब्रह्माण्डपादनिरूपितान्यावरणानि द्वीपाः ॥ ८० ॥ द्वीपसन्धयः सूक्ष्माः समुद्राः ॥८१॥ न पार्थिवास्ते द्वीपाः ॥ ८२ ॥ न जलमयास्ते समुद्राः ॥८३॥ अलौकिकत्वेन वर्णनात् ॥ ८४ ॥ आवरणेषु द्वीपत्वाद्यारोपो बालबुद्धिप्रवेशार्थः ॥ ८५ ॥

मानसोत्तरादिषु रविगतिवर्णनापि खगोलापेक्षया ॥ ८६ ॥ महान् हि खगोलः ॥ ८७ ॥ भूगोलापेक्षया मध्यन्दिने रात्र्यापत्तेः ॥ ८८ ॥ दवीयान् मानसोत्तरगिरिः ॥ ८९ ॥ विषुवतश्चतुर्विंशत्यक्षांशपर्यन्तमेव रविगतिः ॥ ९० ॥ तथा च रवौ नक्रकर्कयोः षाण्मासिकं रात्रिन्दिनंमेरुवडवानलयोः ॥ ९१ ॥ का कथा मानसोत्तरादीनाम् ॥ ९२ ॥

तस्मात् प्लक्षादयोः द्वीपाः सूक्ष्माः॥ ९३ ॥ वायव्यादिसृष्टिप्रपञ्चा ब्रह्माण्डावरणानीति सिद्धम् ॥ ९४ ॥ ब्रह्माण्डस्यैवोपक्रमात् ॥ ९५ ॥ भगवद्विभूतित्वेन ध्येयत्त्वात् ॥ ९६ ॥ यद्यावान्तरद्वीपेषु प्लक्षादिव्यवहारः सोऽभिमत एव ॥ ९७ ॥ यथा नीलोनाम वर्षगिरिर्मिलयसमीपस्थश्च ॥९८॥ माल्यवान् वर्षगिरिर्भारते च ॥ ९९ ॥ भिन्ना एव पूर्वोक्ताः प्लक्षादयः ॥ १०० ॥

आदर्शोदरसन्निभा धरणिरित्यपि भूपटलविवक्षया ॥१०१॥ प्रकृत्या विषमा भूमिरिति व्यासोक्तेः ॥१०२॥ प्रेक्षयित्वा भुवो गोलमिति मैत्रेयोक्तेः ॥१३॥ नदीगत्या कमठसादृश्यस्य साधितत्वात् ॥१०४॥ दक्षिणोत्तरतो निम्ना मध्ये तुङ्गा यथा क्षितिः, इति मार्कण्डेयः ॥१०५॥ गोलशतांशस्य तु समता भवत्येव ॥ १०६ ॥ तद्वर्णने न कोपि दोषः ॥ १०७ ॥ तावन्मात्रापेक्षया खण्डने स्वसिद्धान्त व्याघातः ॥ १०८ ॥ प्रत्यक्षविरोधश्च ॥ १०९ ॥ तस्मात्समानः सर्वेषां गोलः ॥ ११० ॥

---

१ सन्तु वा पार्थिवाः, परन्तु–अस्मदाद्यगम्याः ।

गोलव्यापको ब्रह्माण्डस्तु ध्येयः ॥१११॥ भूलोकान्महर्लोक पर्यन्तं गोलः ॥ ११२ ॥ अत्र सूर्यप्रकाशः ॥ ११३ ॥ जनस्तपः सत्यलोकाः स्वतः प्रकाशाः ॥ ११४ ॥ अतलादयः सप्त पृथिवी-पुटानि ॥ ११५ ॥ मणयादि-प्रकाशस्तेषु ॥११६॥ नागादीनां निवासस्थानानि ॥११७॥ पातालभुवनेश्वरादयः प्रत्यक्षाः ॥११८॥ तदिदं ब्रह्माण्डम् ॥ ११९ ॥ लौकिकमलौकिकञ्चेति वर्णि-तम् ॥ १२० ॥ तदाभासकं चैतन्यं ब्रह्म ॥ १२१ ॥

जम्बूद्वीपेऽपि हेमाद्रिरलौकिकः सूक्ष्मो योगिगम्यः ॥१२२॥ ब्रह्मलोकादागताया गङ्गायाः, तच्छिखरे विभागः ॥१२३॥ ततः सीताया गन्धमादनगमनम् ॥१२४॥ ततो भद्राश्वगमनम् ॥१२५॥ अलकनन्दाया मेरुशिखराद् हिमालय-गमनम् ॥१२६॥ ततो भारते ॥१२७॥ चक्षुषो मेरुशिखराद् माल्यवति गतिः ॥१२८॥ ततः केतुमालगमनम् ॥१२९॥ भद्राया मेरुशिखराद् शृङ्गवति गमनम् ॥१३०॥ ततः कुरुवर्षे गमनम् इति वर्णितम् ॥१३१॥ तदेतद् ब्रह्मलोकादागमनम् विभागो मर्यादागिरिषु गमनम् अलौकिकम् ॥१३२॥ अन्यत्सर्वं लौकिकम् ॥१३३॥ अस्मदादि-प्रत्यक्षविषयीभूतं लौकिकम् ॥ १३४ ॥ योगिप्रत्यक्षविषयीभूत-मलौकिकम् ॥१३५॥ अतीन्द्रियज्ञाः योगिनः ॥१३६॥ अस्ति-सूक्ष्मोऽपि सृष्टिप्रपञ्चो ध्येयः ॥ १३७ ॥

(इति गोलसूत्रे द्वितीयाध्याये परिहारपादः प्रथमः ।)

अथ वर्ष-निरूपणम् ॥ १ ॥ तत्रादौ भारतस्य ॥ २ ॥ चीनः, श्यामो, ब्रह्मदेशो, दिविष्ठः, कुमारिका, गान्धाराः, पार-सीका, स्तुरुष्काः, अवरा इति नवभागाः ॥ ३ ॥ आद्याश्चत्वारो बौद्धैराक्रान्ताः ॥ ४ ॥ अन्त्या म्लेच्छैः ॥ ५ ॥ सिन्धु ब्रह्मपुत्र सागर संपुटितः सकामरूपः कुमारिकाखण्डः ॥ ६ ॥ अयमपि

द्विधा, प्राच्योदीच्य-भेदात् ॥ ७ ॥ नर्मदाशोणाभ्यामुदक् पश्चादुदीच्यः ॥ ८ ॥ प्रागवाक् प्राच्यः ॥ ९ ॥ शरावती विभाजिकेति प्राञ्चः ॥ १० ॥ अस्ति शरावती नृसिंहपुरमण्डले ॥ ११ ॥ उत्तर-गामिनी नर्मदायाम् ॥ १२ ॥ उपलक्षणमियं नर्मदायाः ॥ १३ ॥ क्षुद्रत्वेनाऽप्रसिद्धत्वात् ॥ १४ ॥ उदीच्य एवाऽऽर्यावर्त्त-इति मनुः ॥ १५ ॥ प्राच्योऽपीति पतञ्जलिः ॥ १६ ॥ तथैव व्यवहारो लोके ॥ १७ ॥ संकल्पादौ स्मरणं शिष्टपरम्परागतं प्रमाणम् ॥ १८ ॥ पर्वताश्चास्य सीमासु ॥ १९ ॥ प्राचि कालकवनम् ॥ २० ॥ दक्षिणस्यां मलयः ॥ २१ ॥ पश्चिमायां सिन्धोः परमादर्शः ॥ उत्तरस्यां हिमालयः ॥ २२ ॥ मध्ये कर्करेखायां विन्ध्यः ॥ २३ ॥ विन्ध्यपृष्ठे मध्यभारतम् ॥ २४ ॥ उदग्-उत्तर-भारतम् ॥ २५ ॥ अवाग्-दक्षिणभारतम् ॥ २६ ॥

उत्तरभारतं पूर्वापरायतम् ॥ २७ ॥ दक्षिणं त्रिकोणम् ॥ २८ ॥ अस्य पश्चिमतो वायव्यायतः पश्चिमपर्वतः ॥ २९ ॥ पूर्वत ईशानायतः पूर्वपर्वतः ॥ ३० ॥ नीलगिराविमौ सङ्गच्छेते ॥ ३१ ॥ मलयादुदङ् नीलगिरिः ॥ ३२ ॥ दर्दुरश्च ॥ ३३ ॥ दर्दुरादुत्तरं पश्चिमपर्वतभागः सह्यपर्वतः ॥ ३४ ॥ कावेरी मूलतः कृष्णा-मूलपर्यन्तमित्येके ॥ ३५ ॥ गोदावरीमूले त्र्यम्बकेश्वरः पर्वतः शिवश्च ॥ ३६ ॥ अस्यैव समसूत्रे प्राचि पूर्वपर्वतोत्तरभागो महेन्द्रः ॥ ३७ ॥ एषामेवाऽवान्तरभेदा बहवः ॥ ३८ ॥ तत्प्रभवा नद्यश्च ॥ ३९ ॥ तथा च भागवतम् ॥ ४० ॥ भारतेऽप्यस्मिन्वर्षे सन्ति सरिच्छैला बहवः मलयो, मङ्गलप्रस्थो मैनाकः, त्रिकूटः, ऋषभकः, कूटकः, कोल्लकः, सह्यः, देवगिरिः, ऋष्यमूकः, श्रीशैलः, वेङ्कटः, महेन्द्रः, वारिधारः, विन्ध्यः शुक्तिमान्, ऋक्षगिरिः, पारियात्रः, द्रोणः, चित्रकूटः, गोवर्धनः,

नीलपर्वतः
दर्दुरपर्वतः
सह्यपर्वतः

रैवतकः, ककुभः, नीलः, गोकामुखः, इन्द्रकीलः, कामगिरिरिति चान्ये च शतसहस्रशः शैलास्तेषां नितम्बप्रभवा नदा नद्यश्च सन्त्यसंख्याताः ॥ ५ । १९ । १६ ॥ एतासामापो भारत्यः प्रजा नामभिरेव पुनन्तीनामात्मना चोपस्पृशन्ति ॥ ५ । १९ १७ ॥ चन्द्रवशा, ताम्रपर्णी, अवटोदा, कृतमाला, वैहायसी, कावेरी, वेणी, पयस्विनी, शर्करावर्त्ता, तुङ्गभद्रा, कृष्णा, वेण्या, भीमरथी, गोदावरी, निर्विन्ध्या, पयोष्णी, तापी. रेवा, सुरसा, नर्मदा, चर्मण्वती, सिन्धुः, अन्धः शोणश्च नदौ, महानदी, वेदस्मृती, ऋषिकुल्या, त्रिसामा, कौशिकी, मन्दाकिनी यमुना, सरस्वती, दृषद्वती, गोमती, सरयू, रोधस्वती, सप्तवती, सुषोमा, शतद्रुः, चन्द्रभागा, मरुद्वृधा, वितस्ता, असिक्नी, विश्वा,-इति महानद्यः ॥ ५ । १९ । १८ ॥

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः, विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः, इति चान्यत्र ॥ ४१ ॥

जनपद विभाजकाः कुलपर्वताः ॥ ४२ ॥ कुलशब्दो जनपदवाची ॥ ४३ ॥ हिमालयादौ कुलशैलप्रयोगः प्रौढिमात्रेण ॥ ४४ ॥ तेषां वर्षविभाजकत्वात् ॥ ४५ ॥

ब्रह्मपुराणे महानद्यः—

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका । तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥ १ ॥ भागीरथी नर्मदा च यमुना च सरस्वती । विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः ॥ २ ॥ द्वादशैता महनद्यो देवर्षिक्षेत्र-संभवाः-इति-परिगणिताः ॥ ४६ ॥

---

१ विपाशा-इति पाठः समुचितः ।

महानदाश्च—

शोण-सिन्धु-हिरण्याख्याः कोक-लोहित-घर्घराः । शतद्रूश्च नदाः सप्त पावनाः परिकीर्तिताः ॥ इति देवलोक्ताः ॥ ४७ ॥

देशान्तरं लक्षयति बृहस्पतिः-

महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः, वाचो वा यत्र भिद्यन्ते तद्देशान्तरमुच्यते, इति ॥ ४८ ॥

निरक्षदेशाल्लङ्कास्थानात् क्रमतोऽक्षरेखास्थितानि स्थानानि, लङ्कात उत्तरस्मिन् देवकन्या । ततः स्वामी, सागरः, मेलारः, पर्यली, वत्सगुल्मः, उज्जयनी, कुरुक्षेत्रंमेरुरिति ।

ग्रनिच्देशात् पूर्वस्मिन् ८० दे० लङ्कातः पूर्वस्मिन् पञ्चसुअच्चाशाः । ५ देशान्तरेषु स्थानानि ।

३४ काराकोरमपर्वत-पूर्वभागः, ।
३१ कालिन्दीजान्हवीमूलपर्वतः । गढवाल—मण्डले
२९॥ रामगङ्गा मूलम् । अल्मोडामण्डले
२६ गोमतीमूल स्थानम् " "
२२ वेणीमूलस्थानम् । बालाघाट-मण्डलस्य पश्चिमे
१८॥ वेणीगोदावरी सङ्गमः । हैदराबाद-वत्सतरयोर्मध्ये ।
११॥ कावेरी-सागर-सङ्गः । पाण्ड्यदेशे
९॥ सेतुबन्ध स्थानम् रामेश्वरधाम चात्रैव
६ सिंहलस्य पश्चिमो भागः ७ कोलम्बोनगरञ्चात्रैव ।

मध्यरेखा स्थितानि प्रसिद्ध-स्थानानि ।

३६ काराकोरम पर्वतस्य पश्चिमोभागः काश्मीरस्योत्तरतः
३० कुरुक्षेत्रम् पञ्चनद-प्रान्ते स्थानेश्वर इत्युच्यते
२७ कालञ्जरस्कन्धः मेवाड़देशे

२३ उज्जयिनी मालव देशे
१३ कावेरी तुङ्गभद्रा मूलं सह्याद्रिः

८ देवकन्या = कन्याकुमरी ।
० लङ्का—निरक्षादेशः
ग्र ८३ । म० ८ पू०
२८॥ धवलगिरिः
२५।।। काशी
२५ कामगिरिः मिरजापुर म०
२३ मेकलपूर्वभागः
२० महेन्द्र-मध्यभागः
१८ पूर्वपर्वतारम्भः
१७ वेला

ग्रनिच ८६ मध्यरेखातः ११
२८ एवृिष्ट-शिखरम्
२६ कौशिकीनदी गङ्गासं०
२४ राजगृहम् ( अङ्गदेशे )
२४ संथाल प्रगना-विहारे
२१। वालेश्वर मण्डलम्
२१ वेला—उत्कले

(इति गोलसूत्रे द्वितीयाध्यायस्य द्वितीयपादः ।)

हिमालयस्था देशाः ॥ १ ॥ काश्मीरः, पञ्चनदः, (पञ्जाब) केदारखण्डः ( गढवालः ), मानसखण्डः ( कूर्माचलः ॥ २ ॥ नेपालः, सुक्रमः ( सिक्कम ), दरदाः (भूटान), भूस्थानं वा ॥३॥ एषां देशानामुत्तरतः सदा हिमाच्छादितो मनुष्याणामगम्यो हिमालयः ॥ ४ ॥

तस्य कूटाः । कश्मीरस्योत्तरतः काराकोरमनामकः ॥५॥ केदारखण्डस्योत्तरतो रुद्रहिमालयः ॥६॥ स एव कलिन्दः, जह्नुरित्यादि व्यपदेशभाक्, शिखरभेदात् ॥७॥ नैपालस्योत्तरतो धवलगिरि-शिखरम् ॥८॥ गौरीशिखरश्च ॥६॥ सुक्रमस्योत्तरतः काञ्चनजङ्घाशिखरम् ॥१०॥ भूस्थानस्य हिमालय इत्येव ॥११॥

मानसखण्डस्योत्तरतो मानसं सरः ॥१२॥ तस्योत्तरतः कैलासः ॥१३॥ मानसस्य दक्षिणतस्तीर्थपुरी ॥ १३ ॥

मानससरः समीपाद् परपूर्ववाहिनौ सिन्धु-ब्रह्मपुत्र नदौ॥१४॥ आभ्यां वेष्टितः सहिमालयः कुमारिकाखण्डः ॥१५॥ उत्तरतो हिमश्वेतैः पर्वतैर्व्याप्तो दिविष्ठः ॥१६॥ अत एव सार्द्धषड्त्रिंशाक्षांशेभ्योऽष्टात्रिंशदक्षांशपर्यन्तं हिमालयः सामान्यतः ॥ १७ ॥ अवयवेषु भिन्नोऽपि व्यवहारः ॥१८॥ तत्र भूस्थानस्योत्तरतोऽष्टाविंशत्यंशेषु हिमाच्छादितः ॥१९॥ काञ्चनजङ्घा ततोऽप्यधस्तादेव ॥२०॥ तथैवगौरी शिखरम् ॥२१॥ धवलगिरिः काशीसमसूत्रे नवविंशत्यंशेषु ॥२२॥ एतावान् पूर्वापरायतो हिमवान् ॥२३॥ ततो वायव्याभिमुखः ॥३४॥ मानसकेदारखण्डयोस्त्रिशदंशोत्तरम् ॥२५॥ पञ्चनदे च द्वात्रिंशदंशोत्तरम् ॥२६॥

इति प्रथम-प्रकरणम् ।

(कश्मीर) कश्मीरस्तु चतुस्त्रिंशाक्षांशेभ्योऽष्टात्रिंशदंशान्तो हिमाच्छादितैरेव पर्वतैः परितो वेष्टितः ॥२७॥ अस्य मध्ये पश्चिमाभिमुखः सिन्धुनदः ॥२८॥ काराकोणाद्दक्षिणाभिमुखः ॥२९॥ उत्तरतः पूर्वोक्तः पर्वतः ॥३०॥ मध्ये वितस्ता—नदीमूलं सरः ॥३१॥ पश्चिमतः, चित्रालदेशः ॥३२॥ स एव कारापथ इत्येके ॥३३॥ दक्षिणतः पञ्चनदः ॥३४॥ तस्य पश्चिमतः सिन्धुनदो दक्षिणामुखः ॥३५॥ ततः परं कम्बोजा, गान्धाराः ॥३६॥ ततः परं नैर्ऋत्यायतः हिन्दुकुशनामा पर्वतः ॥३७॥

(पञ्चनद-प्रकरण) पञ्चनदे शतद्रुः, विपाशा, इरावती, चन्द्रभागा, वितस्ता इति महानद्यः सिन्धुना नदेन सङ्गच्छन्ते ॥३८॥ सर्वा दक्षिणामुखाः ॥३९॥ अस्य पूर्वतः कुरुदेशः ॥४०॥ कुरुदेशस्य मध्ये सरस्वती नदी दक्षिणवाहिनी ॥४१॥ अत्रैव कुरुक्षेत्रम् ॥४२॥ कुरुदेश-

स्योत्तरतो यामुनो देशः ॥४३॥ शतद्रु-यमुनयोरन्तरालस्थः ॥४४॥ दक्षिणतो मरुभूमिः ॥४५॥ राजपूताना इत्युच्यते ।

मरुदेशस्य दक्षिणतः कच्छः सागरखातपरिवृतः ॥ ४७ ॥ पश्चिमतः सिन्धुदेशः ॥ ४८ ॥ अत्र सिन्धुनदो द्विधारो वहति ॥४९॥ सिन्धुना कर्करेखाया उत्तरतो नारायणसरसि मिलति ॥५०॥ एतावत् पञ्चनदचक्रम् ॥५१॥

इति द्वितीयाध्याये द्वितीयपादे प्रथमचक्रम् ।

मानसात्पूर्वाभिमुखो ब्रह्मपुत्रः ॥ लासा, समीपत उत्तराभिमुखः ॥५२॥ ततः पूर्वाभिमुखो भवन् दक्षिणाभिमुखः ॥५३॥ भूस्थानस्य पूर्वतः पश्चिमाभिमुखः ॥५४॥ पश्चिमाभिमुखेऽस्मिन् भूस्थानाद्दक्षिणामुखा सर्वानद्यः ॥५५॥ अस्य दक्षिणतः पूर्वापरायतः खशः पर्वतः ॥५६॥ अस्य सर्वतः कामरूपो देशः॥५७॥ संप्रति, उत्तरतः पूर्वीय वङ्गः ॥५८॥ दक्षिणत आसाम इति॥५९॥ अयमेवाङ्गदेश इत्येके,ने,त्यन्ये ॥६०॥ पूर्वतो मणिपूर इति॥६१॥ आसामपश्चिमभागे दक्षिणाभिमुखो ब्रह्मपुत्रः ॥६२॥ कर्करेखासविधे गङ्गासागरसङ्गतः पूर्वस्मिन् सागरेण ॥६३॥ अनयोर्मध्ये सुह्मदेशोऽयम् ॥६४॥ गङ्गायाः स्रोतोन्तरेषु वङ्गाः ॥६५॥ उत्तरतो ढक्कवर्द्धमानादयः ॥६६॥ सकामरूपाः सर्वे वङ्गनाम्ना व्यवह्रियन्ते ॥६७॥ वङ्गतो नैर्ऋत्याभिमुखी वेला ॥६८॥ अत्र-कपिशानदीपर्यन्तं वङ्गदेशः ॥६९॥ तत उत्कलदेशः ॥७०॥ कपिशा, वैद्यनाथप्रदेशात्पूर्वाभिमुखी खड्गपुरसविधे ॥७१॥कसाई-इति लोके ॥७२॥

इति ब्रह्मपुत्रप्रकरणम् ।

मानसात् पश्चिमदिशि वायव्याभिमुखो रुद्रहिमालयः ॥७३॥ अस्यैव पश्चिमभागः कलिन्दः ॥७४॥ मध्योजह्नुः ॥७५॥ पूर्वो-

भागः केदारस्थानम् ॥७६॥ ततः पूर्वस्मिन् वदरिकाश्रमः । अस्य दक्षिणतः केदारखण्डः ॥७८॥ उत्तरेण शतद्रुः पञ्चनदाभिमुखी ॥७९॥ मानससरस इयम् ॥८०॥ असंख्याताऽत्र नद्यः ॥८१॥ तासु वदरीत अलकनन्दा ॥८२॥ केदारतो मन्दाकिनी ॥८३॥ जह्नु-शिखराज्जाह्नवी ॥८४॥ जाह्नव्याः पश्चिमतः कलिन्दस्याऽवाग्-भागतः कालिन्दी ॥८५॥ प्रथममिमे पश्चिमाभिमुख्यौ ॥८६॥ पुनराग्नेयवाहिन्यौ ॥८७॥ त्रिंशत्-क्रोशान्तरेण वहन्त्यौ मानससमसूत्रेऽन्तर्वेदीं निष्पादयन्त्यौ, तीर्थराजं जनयतः ॥८८॥ प्रयागोऽन्तर्वेदी, ब्रह्मावर्त्तो, मथुरा, शूरसेनाः, हस्तिना गङ्गाद्वारादयः क्रमशोऽन्तराले ॥८९॥ मण्डलदेशा इमे ॥९०॥

(पूर्वप्रदेशाः) अवध, उत्तर-कोसलः, कान्यकुब्जः, सम्भलश्चेति-गङ्गाया-उत्तरतः ॥९१॥ प्रयागात्पूर्वाभिमुखी गङ्गाऽतीव कुटिला ॥९२॥ अत एव काश्यामुत्तरवाहिनी ॥९३॥ पुनः पश्चिमाभिमुखी गोमत्या मार्कण्डेयेश्वरे ॥९४॥ ततः पूर्वाभिमुखी गाधिपुरे ॥९५॥ ततो वलियामण्डलमन्तरयन्ती भृगुतीर्थे सरयू-सहिता ॥९६॥ व्याघ्रसरः प्रान्ते शोणेन दक्षिणतः ॥९७॥ उत्तरतो गण्डक्या

हरिहरक्षेत्र ॥९८॥ त्रितयसङ्गमे हरिहरक्षेत्रम् ॥९९॥ ततः पूर्वस्मिन् राजगृहे, उत्तराभिमुखी दक्षिणाभिमुख्या कौशिक्या सङ्गच्छते ॥१००॥ वङ्गेऽनेकप्रवाहैः समुद्रेण ॥१०१॥ गण्डकी-कौशिक्योरन्तराले मिथिलादेशः ॥१०२॥ गण्डक्याः पश्चिमतः सरयूत्तरत उत्तर-कोसलो देशः ॥१०३॥ अयं सरयूपार-इति प्रसिद्धः ॥१०४॥

नेपाल: अनयोरुत्तरतो नेपालः ॥१०५॥ नेपालपूर्वतो गौरीशिखर समीपतः कौशिकी ॥१०६॥ सप्त कौशिक्यः ॥१०७॥ पृथक् पृथक् पर्वतान्तरिताः ॥१०८॥ पश्चिमतो गण्डकी धवल-गिरेः पूर्वतः

॥१०९॥ इयमपि नाना-प्रवाहा ॥११०॥ मध्ये-नेपालं वाङ्मती-विष्णुमतीप्रभृतयः ॥१११॥ वाङ्मती मिथिलायामुत्तरतः पूर्व-वाहिनी, कौशिक्या ॥११२॥ धवलगिरिपश्चिमभागाद् घर्घरः॥११३॥ बहराइच,-मण्डले सरयू-नद्या ॥ ११४ ॥ घर्घरात्पश्चिमो भागो गोलागोकर्णदेशः ॥११५॥ सीतापुर, लखीमपुर, पीलीभीत, प्रभृतीनि मण्डलानि ॥११६॥ ततोहरिद्वारपर्यन्तं रूहेलखण्डः तत उत्तरस्मिन् मानसखण्डः ॥११७॥ अयं देशो नैपालराज्येँऽशतोँऽशतो गुरखण्डराज्ये ॥ ११८ ॥ मध्ये काली नदी ॥११९॥ अस्यां धवली, गौरी, निस्माण्डा, इति-मानससमीपतः पूर्वाभिमुखा ॥१२०॥ इमा काल्या ॥ १२१ ॥ रामेश्वरे वाशिष्ठी सरय्वा ॥१२२॥ पञ्चेश्वरे सरयू मिलति काल्या ॥१२३॥ इमा सरयूधारा ॥ १२४ ॥ मुख्या सरयूधारा दानवपुरस्थ-सरयूमूलतः ॥ १२५ ॥ मानससरयूमूलयोर्मध्ये नन्दाशिखरमात्रव्यवधानम् ॥१२६॥ सार्द्धत्रिंशदक्षांशे सरयूमूलम् ॥१२७॥ एकत्रिंशदक्षांशेषु मानसं ॥ १२८ ॥ अल्मोडामण्डलान्तर्गतम् दानवपुरम् ॥ शुम्भगढ, इति तत्र प्राचीनो ग्रामः सचिह्नः ॥ १३० ॥ अल्मोडा मण्डलस्यैव दक्षिणभागतो गोमती ॥१३१ ॥ पश्चिमतो रामगङ्गा ॥१३२॥ इयं सम्भलं[1]प्लावयन्ती कान्यकुब्जे गङ्गया ॥१३३॥ रामगङ्गायाः पश्चिमे गढवालं[2], इत्युच्यते ॥१३४॥ निरूपिता अत्रत्या गङ्गादयः ॥१३५॥ नंदं, स्कन्दं, तथा रौद्रं देवेन्द्रं, वटमेव च पञ्चप्रयागान् स्मरेन्नित्य,मित्युक्तेषु चत्वारस्तत्रैव ॥१३६॥ गढवालदेशे टिहरीराज्यम् राजाधीनम् ॥१३७॥ अवशिष्टं गुरखण्डचक्राधीनम् ॥ १३८ ॥ ततः पश्चिमो भागो यमुना-पर्यन्तो देहरादून इत्युच्यते ॥ १३९ ॥ ततः पश्चिमे पञ्चनदः ॥ १४० ॥

१ इयं मार्कण्डेयेश्वरे गङ्गया । २ अयमेव केदारखण्डः ।



= गुरखण्डराज्यं १८४७ ईशवीये समाप्तम् ।

एतेषु हिमवतोभागेषु सर्वा नद्यः प्रायो दक्षिणाऽभिमुखाः॥१४१॥ समतले- आग्नेयाऽभिमुखा गङ्गया मिलन्ति ॥१४२॥ कौशिकी दक्षिणाऽभिमुखैव ॥१४३॥ यमुना सरय्वोर्मध्यस्थो भृगुतीर्थान्तो युक्तप्रदेश इत्युच्यते ॥ १४४ ॥

(विहारदेशः) मिथिलामगधयोर्विहार-इतिनाम ॥ १४५ ॥ गङ्गाया दक्षिणतः पाटलिपुत्र,-गया-पृभृतीनि मण्डलानि मगधदेशः ॥१४६॥ (मगध) अयंदेशो राजगृहपर्यन्तमायतः अस्यैव पूर्वो भागः,-अङ्गदेशः (अङ्गदेशः) ॥१४७। अस्यैव नर्ऋत्य-भागे लघुनागपुरमित्युच्यते ॥ १४८॥ अत्रैव विन्ध्यस्य प्राच्यभागः पारसनाथ इत्युच्यते ॥ १४९ ॥ शिवश्च ॥ १५० ॥ अस्योत्तरतो वैद्यनाथधाम ॥१५१॥ अत्रत्या नद्यः पूर्ववाहिन्यः ॥१५२॥ दामोदर,-कपिशा-,ब्राह्मी (ब्राह्मणी,) प्रभृतयः ॥१५३॥ फल्गु-पुनःपुना-प्रभृतयो गङ्गया ॥ १५४ ॥

इति हिमालय पादस्तृतीयः ॥

मध्येभारतं विन्ध्यः ॥१॥ अयं पूर्वपरायतः ॥ २ ॥ कर्करेखा-मध्यगः ॥३॥ अस्य पाश्चात्यो भागः कालञ्जरः ॥ ४ ॥ कालञ्जरो याम्योत्तरायतः ॥५॥ अर्वली; नाम्ना प्रसिद्धः ॥६॥ मध्यो भागो नैर्ऋत्यैशानायतो विन्ध्य-इत्येव प्रसिद्धः ॥ ७ ॥ अनयोर्मध्ये वायव्यायतोऽयम् ॥ ८ ॥ विन्ध्यस्य दक्षिण-पार्श्वे नैर्ऋत्याभिमुखी नर्मदा ॥ ९ ॥ नर्मदाया दक्षिणात ऋक्षगिरि रित्येके ॥ १० ॥ शुक्तिमानित्यन्ये ॥ ११ ॥ सतपुरा-इति तु लोके ॥ १२ ॥ तस्य पूर्वतो महादेवगिरिः ॥ १३ ॥ अयं देवगिरित्येके ॥ १४ ॥ अस्मान्नैर्ऋत्याऽभिमुखी तापी ॥ १५ ॥ तापी-नर्मदा-मुखे सिन्धुरन्तर्भुव प्रविष्टः ॥ १६ ॥ सौराष्ट्र खातमिदम् ॥ १७ ॥ महादेवात्पूर्वतो मेकलः ॥ १८ ॥ अस्माद

१ राजमहल-इति प्रसिद्धः । २ अत्रत्या अङ्गदेशं स्मरन्ति स्त्रोयम् ।

नेकधारा नर्मदा निःसरति ॥ १९ ॥ महादेव-मेकलयोर्मध्याद्वेणी दक्षिणाऽभिमुखी ॥ २० ॥ मेकलादुदग्वाही शोणः ॥ २१ ॥ कामगिरि दक्षिण भागात् पूर्वमुखः ॥ २२ ॥ गिरिं त्यक्त्वेशानाभिमुखः ॥ २३ ॥ कामगिरेरुत्तरतश्चित्रकूटः ॥ २४ ॥ पारस(द)नाथः कथितो मगधेषु ॥२५॥ उत्कलेषु नीलगिरिरिति तत्रत्याः ॥ २६ ॥ मेकलस्य दक्षिणे महेन्द्रः, अनयोर्मध्ये मध्यप्रदेशः ॥ २७ ॥ महेन्द्रादुत्तराऽभिमुख्यो नाना धारा, मेकलात्पूर्वाऽभिमुख्यः शतशो मिलिता महानदी ॥ २८ ॥ इयमुत्कले पूर्वाभिमुखी ॥ २९ ॥ तदयमुत्कलो देश ईशानतः—कपिशया, नैर्ऋत्यतो—म[१]हानद्या, पूर्वतो—महोदधिना, संपुटितः ॥ ३० ॥ मध्ये ब्राह्मी वैतरणीभ्यां विराजितः ॥ ३१ ॥ ब्राह्मी राँची मण्डलान्महानद्या उत्तर उत्कले महोदधौ ॥ ३२ ॥ कपिशा, पालामउ, मण्डलात्प्रभवति ॥ ३३ ॥ रांची हजारी बागमण्डलयोः सीमांकुर्वती वङ्गोत्कलदेशयोः सीमां विदधाति ॥३४॥ कपिशाया नैर्ऋत्यभागे मेदिनीपुर—मण्डलम् ॥ ३५ ॥ इदं राजनैतिके वङ्गदेशे ॥ ३६ ॥ ततोमयूर-भञ्जराज्यम् ॥ ३७ ॥ महोदधि मयूरभञ्जयोर्मध्ये वालेश्वर मण्डलम् ॥ ३८ ॥ ततः कटकमण्डलम् ॥३९॥ अत्रैव महानदी ब्राह्मी ( ब्रह्मणी ) मुखम् ॥४०॥ ततो जगन्नाथपुरी ॥४१॥ अस्यैव मण्डलस्य नैर्ऋत्ये "चिलका,, नाम महासरः ॥ ४२ ॥ ततः कलिङ्गदेशः ॥४३॥ चिलका सरः समुद्र—सँल्लग्नः ॥ ४४ ॥ इदंसरो भूमध्यरेखातः पूर्वस्मिन्दशसु देशान्तरेषु ॥४५॥ सपादैकोन विंशत्यच्चांशेषु ॥४६॥ अस्यैव समसूत्रे सप्तसु लङ्कादेशान्तरेषु दक्षिणापथ—पाटलिपुत्रम् ॥ ४७ ॥ तस्योत्तरभागे सम्भलपुर- मण्डलम् ॥ ४८ ॥

वङ्गोत्कल

१ ऋषिकुल्यया गञ्जाम, मण्डलस्थया इतिपूर्वं ।

अत्र-वत्सतर देशोद्भवा-ईशानवाहिनी ढेलानदी महानद्या ॥४९॥ अस्योत्तरतो मण्डलमात्रान्तरितं राँची मण्डलम् ॥ ५० ॥ राँचीत उत्तरतोऽव्यवहितं पालामउ मण्डलम् ॥ ५१ ॥ तस्योत्तरत आरामण्डलम् ॥ ५२ ॥ आरामण्डलं काशीमण्डल-सँल्लग्नमेव ॥५३॥ सोऽयं काश्याः पुरीपर्यन्तं वायव्याऽऽग्नेया-ऽभिमुखः सूत्रपातः ॥ ५४ ॥ काशी २५ । जगन्नाथ-पुरी १९ । राँचीमण्डलमारभ्य उत्तरस्मिन्मगधो देशः ॥ ५५ ॥ पूर्वस्मिन् मण्डलमात्रान्तरितं रघुनाथपुरम् ॥ ५६ ॥ तस्य दक्षिणतो मयूर-भञ्ज एव ॥ ५७ ॥ सम्भलमयूरभञ्जयोर्मध्ये त्रिचतुर्णामण्ड-लानि ॥ ५८ ॥ सोऽयमुत्कलो देशः ॥ ५९ ॥

(मध्यप्रदेशः) मेकलमहेन्द्रयोर्मध्ये मध्यप्रदेशः, अत्राऽऽग्नेयाभिमुखी महा-नदी ॥६१॥ दक्षिणात आग्नेयाभिमुखी गोदावरी ॥६२॥ ईशानतो-नैर्ऋत्याभिमुखी नर्मदा ॥६३॥ अत्र महेन्द्रस्योत्तरतो वत्सतरो देशः ॥६४॥ वस्तर इति ॥६५॥ विलासपुर, राजपुर, दुर्ग, इति मण्डल-(छत्तीसगढ़) त्रयं षट्त्रिंशद्गढ़संज्ञितम् ॥६६॥ तस्य पश्चिमतो वालाघाट, नाममण्डलम् ॥६७॥ सर्वतःप्रवणमेतन्मण्डलम् ॥६८ ॥ अस्मा-त्पूर्ववाहिन्यो महानद्याम् ॥ ६९ उत्तरवाहिन्यो नर्मदायाम् ॥७०॥ पश्चिमगामिन्यस्ताप्त्याञ्च ॥ ७१ ॥ अस्यैव पश्चिमभागाद्वेणी, दक्षिणाभिमुखी ॥ ७२ ॥ अन्याश्च तस्याम् ॥ ७३ ॥ ततः (नागपुरम्) पश्चिमे नागपुरम् ॥७४॥ नागपुरस्य नैर्ऋत्यभागे विदर्भदेशः ॥७५॥ (विदर्भदेशः) वरार,-इति लोके ॥७७॥ वारिधारा नदी पर्वतोऽपि वारि धारः । पर्वतप्रायोऽयं सर्वान्नसम्पन्नः प्रदेशः ॥७८॥ मध्ये बहवोऽत्र रामप-(छोटा नागपुर) दाङ्कितानि स्थानानि ॥८०॥ अस्य-ईशाने छोटकं नागपुरम् ॥८१॥ पूर्वस्मिन्-उत्कलोदेशः ॥ ८२ ॥ आग्नेये विजयनगर राज्यम् ॥ ८३ ॥ दक्षिणस्मिन् गोदावरी ॥ ८४ ॥ नैर्ऋत्ये

हैदराबाद राज्यम् ॥ ८५ ॥ विदर्भाश्च ॥ ८६ ॥ पश्चिमे महाराष्ट्रदेशः ॥८७॥ वायव्ये होलकर राज्यम् ॥ ८८ ॥ उत्तरस्मिन्दशार्णा देशः ॥८९॥ तदयं त्रिकोणेषु चतुरस्रो राजनैतिको मध्य प्रदेशः ॥ ९० ॥

मध्यभारत नर्मदाया उत्तरतो दशार्णा–देशः ॥ ९१ ॥ भूपाल, सागर, दमह,मण्डलादिः ॥ ९२ ॥ अस्योत्तरो भागो बुदेलखण्ड इत्युच्यते ॥९३॥ पूर्वतो मिरजापुरमण्डलस्य दक्षिणोभागः ॥९४॥ पश्चिमतो झांसी मण्डलम् ॥९५॥ तस्य पश्चिमतो होलकर राज्यम् ॥९६॥ अयमवन्ति देशः ॥ ९७ ॥ अस्योत्तरतो मालवः ॥ ९८ ॥ अत्रोदक्प्रवणा भूमिः ॥ ९९ ॥ नद्यो यमुनया ॥ १०० ॥ प्राय ईशानाभिमुखाः ॥ १०१ ॥

कालञ्जरात्पूर्वाभिमुखी वनास नदी ॥१०२॥ उज्जयिन्याः सिप्रा ॥१०३॥ इयं याम्योत्तरायां रेखायामुत्तराभिमुखी ॥१०४॥ चर्मण्वत्या च मिलिता ॥ १०५ ॥ ब्रह्मावर्तदक्षिणभागे यमुनया ॥१०६॥ इन्दौर, मण्डलात्सिन्धुनदी ॥ १०७ ॥ भूपालमण्डलात्पूर्वतो बेत्रवती॥१०८॥ पश्चिमतः पार्वती ॥१०९॥ सागरमण्डलान्निर्विंध्या दशार्णा च॥११०॥ अन्तर्वेद्या दक्षिणतो यमुनया॥१११॥ मालवदशार्णसीमा, निर्विंध्या ॥ ११२ ॥ दशार्ण एव मध्यभारतम् मध्यभारत ॥११३॥ अस्मादेव दिग्व्यवस्था देशानाम् ॥११४॥ अस्य पूर्वतः शोणः ॥११५॥ दक्षिणतो नर्मदा ॥ ११६ ॥ उत्तरतश्चित्रकूटः ॥११७॥ कामगिरिश्च ॥११८॥ सुभिक्षोदेशः ॥११९॥ अनूपप्रायः ॥१२०॥ विन्ध्यस्योत्तराप्रवणा भूमिरुत्तरापथः ॥ १२१ ॥ दक्षिणाप्रवणा दक्षिणापथः ॥१२२॥ तापीवारिधाराभ्यां दक्षिणोदेशः ॥१२३॥ दशार्णदेशात्पूर्वस्यां, रीवाँ, मण्डलम् ॥१२४॥ रीवाँ तत्र विन्ध्यपृष्ठव्यवहारः संकल्पादौ 'सागरमण्डले' दशार्णा इति

॥ १२५ ॥ तस्याधस्ताच्छोटकं नागपुरम् ॥ १२६ ॥ एतावन्मध्यभारतम् सेन्ट्रल इण्डिया, इत्युच्यते ॥ १२७ ॥ तस्य पुरस्तात्कीकटोदेशः ॥ १२८ ॥ निरूपितो मगधनाम्ना ॥ १२९ ॥ एतावान् पञ्चगौड-इत्युच्यते ॥ १३० ॥

इति विन्ध्य पादश्चतुर्थः ।

(गुर्जरः) विन्ध्यस्य, कालञ्जरस्य च नैर्ऋत्ये दक्षिणतो गुर्जरो देशः ॥ १ ॥ अयं त्रिधा विभक्तः ॥ २ ॥ सौराष्ट्रो, गुर्जर, आनर्त्त-इति ॥ ३ ॥ अवटोदा कालञ्जरान्नैर्ऋत्याभिमुखी तत्रास्य पर्वतस्य शाखा, आँबू, इति प्रसिद्धा, वडोदा इति राज्यञ्च ॥ अवटोदा, नर्मदा-तापी-मुखे सौराष्ट्रः ॥ ४ ॥ कालञ्जरस्य दक्षिणतो गुर्जरः ॥५॥ अस्योत्तरो भाग उदीच्य-इत्युच्यते ॥६॥ द्वारका प्रदेश आनर्त्तः ॥७॥ आनर्त्तस्य पश्चिमे कोणे द्वारकापुरी ॥८॥ ततःपरं कच्छः[1] ॥९॥ आनर्त्तः काटियावाड इत्युच्यते ॥१०॥ आनर्त्तस्य पूर्वतः सोमनाथपर्वतः शिवश्च ॥११॥ सोमनाथस्य पूर्वतो रैवतः ॥१२॥ अयंगिरिनार-इत्युच्यते ॥१३॥ तस्य पूर्वतः-सौराष्ट्र,-खातम्[2] ॥१४॥ तदयं नर्मदा-सौराष्ट्रः सोमनाथ सौराष्ट्र, इति द्विधा विभक्तः ॥१५॥ त्रिषु दिक्षु सागर वेष्टितोऽयं गुर्जरः ॥१६॥ सम्पन्नः सुदेशः ॥१७॥ भूमिरूर्वरा ॥१८॥

अथ दक्षिणदेशः ॥ १ ॥ अयं त्रिकोणः ॥ २ ॥ एकविंशत्यक्षांशेभ्योऽर्वाचीनो भागः ॥ ३ ॥ अस्य पश्चिमभागे पश्चिम-पर्वतः ॥ ४ ॥ आग्नेय-वायव्याऽऽयतोऽयम् ॥ ५ ॥ अस्योत्तरो भागस्त्र्यंबकेश्वरः ॥ ६ ॥ अवरः सह्याद्रिः ॥ ७ ॥ सह्याद्रेरर्वाक्-नीलगिरिः ॥ ८ ॥ नीलगिरेरर्वाक्-याम्योत्तराऽऽयतो मलयः ॥ ९ ॥ अयं सपादाष्टाक्षांशेभ्यो दशाक्षांशपर्यन्तः ॥१०॥

---

१ तस्य रीवाँ मण्डलस्य । २ खम्भात की खाडी ।

नीलगिरेरारभ्य महेन्द्र-पर्वत-पर्यन्तः—पूर्वपर्वतः ॥ ११ ॥ अयं नैर्ऋत्येशानायतः ॥ १२ ॥ अयं शिलोच्चयः ॥ १३ ॥ पश्चिमस्तु महीधरः ॥ १४ ॥ उन्नतश्चायम् ॥ १५ ॥ अत्र-प्राक् प्रवणा भूमिः ॥ १६ ॥ अस्य पश्चिमतः कौङ्कणो देशः १७ समुद्रसँल्लग्नोऽयम् ॥ १८ ॥ अत्र गोकर्णेश्वरः ॥ १९ ॥ अयमेवाऽऽपरान्तः ॥ २० ॥ पञ्चषाणि मडलान्यत्र ॥ २१ ॥ नद्यः क्षुद्राः पश्चिमाभिमुख्यः ॥ २२ ॥ तृणधान्यादि पूर्णाः ॥२३॥ अस्योत्तरभागे महाम्बा ( वम्बे ) नगरम् ॥ २४ ॥ अस्योत्तरभागे त्र्यंवकेश्वरः पर्वतः शिवश्च ॥ २५ ॥ ततः सह्याद्रिपर्यन्तं महाराष्ट्रदेशः ॥२६॥ अत्र-गोदावरी कृष्णे समुद्रगामिन्यौ नद्यौ ॥२७॥ त्र्यंवकेश्वरान्निसृता गोदावरी सप्तभिर्नदीभिः सङ्गच्छते ॥२८॥ दक्षिणतो मञ्जीरयोत्तरमुखया ॥ २९ ॥ अन्यया च ॥ ३० ॥ उत्तरतः क्रमशः पयोष्णया वारिधारया वेण्या च ॥ ३१ ॥ पूर्वत इन्द्रावत्या ॥ ३२ ॥ अतः सप्तगोदावरम्—तीर्थम् ॥ ३३ ॥ पश्चिम पर्वतान्नवदशाभिर्नदीभिः सह-पूर्वाभिमुखी कृष्णा ॥३४॥ तुङ्गभद्रा-वेदस्मृत्यादिभिर्दक्षिणतः ॥ ३५ ॥ भीमा, सुषोमा, प्रभृतिभिरुत्तरतः ॥ ३६ ॥ मद्रे, उत्तराभिमुखी षोडशाक्षांशेषु कैलासरेखायां सागरे ॥ ३७ ॥ गोदावरी-प्रपञ्चे विदर्भः ॥ ३८ ॥ विदर्भस्यैव दक्षिणो भागो 'हैदरावाद, इत्युच्यते ॥ ३९ ॥ विदर्भस्य पश्चिमे महाराष्ट्रदेशः, तुङ्गभद्रा प्रपञ्च पर्यन्तः ॥ ४० ॥

इदं महाराष्ट्र चक्रम् । ( वम्वे चक्रम् ) ।

अथ मद्रचक्रम ॥ १ ॥ इदं महेन्द्रतो मलयपर्यन्तम् ॥ २ ॥ अस्मिन्देशाः क्रमादीशानात्-कलिङ्गाः, आन्ध्राः, कर्णाटकाः, मद्राः, पाण्ड्याः, द्रविडाः, चोलाः केरलाः, ॥३॥ अत्र ऋषिकुल्या गोदावरी, ढेलनदी, इन्द्रावती, सागर सम्पुटितः कलिङ्गः ॥ ४ ॥

ईशाने ऋषिकुल्या ॥५॥ वायव्ये, महानदी-संगता ढेला, नदी ॥६॥
गोदावरी संगता पश्चिम-वाहिनी-इन्द्रावतीच ॥ ७ ॥ इमे महे-
न्द्रगिरेः ॥८॥ महेन्द्रस्त्रिशाखः ॥९॥ द्वे शाखे, कलिङ्गेषु ॥१०॥
एका वत्सतरे ॥ ११ ॥ वत्सतरो देश, उदक्-प्रवणः ॥ १२ ॥
निरुपितोऽयंमध्य-प्रदेशे ॥ १३ ॥ समुद्र सन्निहिता शाखा पूर्व
पर्वतः ॥ १४ ॥ कलिङ्गस्यैव भाग, आन्ध्रः ॥ १५ ॥ अत्रैव
विजयनगर राज्यम् ॥ १६ ॥ कलिङ्गानन्तरं कुरुक्षेत्र-रेखातः
सप्तसु देशान्तर-रेखासु सपादषोडशसु अक्षांशेषु-गोदावरी-सागर
सङ्गमः ॥ १७ ॥ सार्द्ध षट्सु देशान्तरेषु-षोडशसु-अक्षांशेषु-
कृष्णा-सङ्गमः ॥ १८ ॥ ततः सपाद दशांशपर्यन्तं-कलिन्द-सिंह-
ल रेखायां वेला,—याम्योत्तरायता ॥ १९ ॥

ततो मलय-कोटिपर्यन्तं नैर्ऋत्याभिमुखा वेला ॥ २० ॥
कुरुक्षेत्र रेखातः सार्द्धद्वय देशान्तरेषु पूर्वस्मिन्मलयकोटिः ॥२१॥
अत्राक्षांशा अष्ट ॥ २२ ॥ मलयतः पश्चिमे-याम्योत्तरायतः केर-
लोदेशः ॥ २३ ॥ मलय कोटितो वायव्याभिमुखा वेला ॥२४॥
मलयस्य पूर्वभागे द्रविड-देशः ॥२५॥ स एव पाण्डयः ॥२६॥
पृथक् वांऽशभेदात् ॥ २७ ॥ अत्रैव सेतुबन्धः ॥ २८ ॥ आदि-
मपुल, इति प्रसिद्धं सेतुनाम ॥ २९ ॥ रामनाथश्च धाम ॥३०॥
अत्रैव मलयनिःसृता आग्नेयाभिमुखी ताम्रपर्णी सङ्गच्छते ॥३१॥
तत् उत्तरं नीलगिरेः सह्याद्रेश्चानेकाभिर्धाराभिर्निःसृता का-
वेरी ॥ ३२ ॥ इयमेकादशस्वक्षांशेषु सागरेगा ॥ ३३ ॥ अस्या
मूलेषु कुरुक्षेत्र, हरिद्वार रेखासु मैसूर राज्यम् कर्णाटक
देशोऽयमेव ॥ ३४ ॥ मैसूर राज्ये, बङ्गलोर इति राजधानी
॥ ३५ ॥ उत्तरतस्तुङ्ग-भद्रा, ईशानाभिमुखी कृष्णाया ॥ ३६ ॥
मैसूर प्रदेशान्प्रदेषु नद्यः ॥ ३७ ॥ उत्तर-पयस्विनी, दक्षिण-

१ अस्यास्तटे चोलदेशः, तञ्जार-इतिप्रसिद्धं तस्य नगरम् ।

पयस्विनीच ॥ ३८ ॥ मध्ये च पलार-इति ॥ ३९ ॥ आद्ये 'पनार-इति ॥ ४० ॥ अत्र वेला-सन्नि-हिता-मद्रास-इति प्रसिद्धा राजधानी ॥ ४१ ॥ इयं सार्द्ध त्रयोदशांऽशेषु, गङ्गोत्तरी रेखायाम् । ४२ ॥ अस्मादुत्तरो भागः कर्णाटक–समतलम् ॥ ४३ ॥ उत्तर पयस्विन्या उत्तरमित्येके ॥ ४४ ॥ संक्षेपोऽयं कुमारिकायाः ॥ ४५ ॥ सविस्तरं पश्चैर्वक्षामः ॥ ४६ ॥ इति पञ्च द्रविड इत्युच्यते ॥ ॥ इतिमद्रचक्रम् ॥

मद्रासः

---

अथ सिंहलः ॥१॥ अयमुपद्वीपः ॥२॥ भारताभिमुखः ॥३॥ पद्मपत्रनिभः ॥ ४ ॥ अस्य मध्ये त्रिकूटः ॥ ५ ॥ आदिम-पर्वत-इत्युच्यते राम पर्वत इति च ॥ ६ ॥ उत्तराभिमुखः ॥ ७ ॥ अत्र कोलम्बो नामिका राजधानी ॥८॥ इयं 'मद्रास' रेखायाम् ॥९॥ पश्चिम वेलासंल्लग्ना ॥ १० ॥ षड्भ्योऽक्षांशेभ्यो दशांऽशपर्यन्त-मायतः ॥ ११ ॥ लङ्कातःपञ्चदेशान्तरात् षड्देशान्तरपर्यन्तं विस्तीर्णः ॥ १२ ॥ रावणराजधानी रूपा लङ्काऽत्रैव आस्ट्रेलिया महाद्वीपे, इत्येके, आफ्रिकायामित्यन्ये ॥ १३ ॥ गोल–गणित साधिका लङ्का निरक्षदेशः ॥ १४ ॥ विषुवद्रेखाऽक्षरेखयोः सन्धिर्लङ्का ॥ १५ ॥ भारताद्दक्षिणो भागः सर्वोपि लङ्कादेशः ॥ १६ ॥ तस्माद्भिन्नो लङ्काद्वीपः तथाच–जम्बूद्वीपस्य च राजनुपद्वीपानष्टौ हैक उपदिशान्ति स्वर्ण प्रस्थश्चन्द्रशुक्लै, आवर्त्तनो रमणको, मन्दर–हरिणैः पाञ्चजन्यैः सिंहलो लङ्केति-भागवतम् ॥ १७॥ पृथक् पृथक् देशान् निरूपयिष्यामः ॥ १८ ॥

कोलम्बो

इति श्री गोलविद्यायां त्रिविक्रमीये गोलसूत्रे द्वितीयाध्याये मलयपादः पञ्चमः ।

॥ समाप्तोऽयमध्यायः ॥

| पृ० | नदी नाम | बहाव मील | उत्पत्तिस्थान | सम्भेदः (पतनस्थान) | तटपर प्रसिद्धनगरादि वा. ग्रन्थनाम |
|---|---|---|---|---|---|
| २४ | गङ्गाजी | १५२० | गङ्गोत्तरी (जह्नु) | पूर्वसागर, बंगकीखाड़ी | उत्तरकाशी, हरिद्वार, प्रयाग । कानपुर, काशी, कलकता' |
| | अलकनन्दा | १५० | वसोर्धारा, वद्रीनाथ | देवप्रयाग गङ्गामें | श्रीनगर = गढवाल, भागवतमें |
| | मन्दाकिनी | ६० | केदारनाथ | रुद्रप्रयाग अलकनन्दा | सूचना-ये तीनोंधारा त्रिपथगा की हैं |
| २४ | यमुना | ८६० | यमुनोत्तरीसे (कलिन्द) | प्रयागराज, गङ्गामें | पानीपत, दिल्ली, वृन्दवन, मथुरा, आगरा, इटावा, काल्पी, हमीरपुर, रघुवंशकाव्यमें स० ६।१५ । |
| २६ | चर्मण्वती (चम्बल) | ५७० | कालञ्जर (विन्ध्य) | इटावाकेपास यमुनामें | धारकोट,, धौलपुर, भागवतमें । |
| २६ | सिप्रा | | उज्जैन, भूमध्यरेखा में उत्तर वाहिनी | चर्मण्वतीमें | उज्जयनी, महाकालेश्वर, रघुवंशमें |
| ,, | सिन्धुनदी | | विन्ध्यपर्वत | यमुनामें | इन्दौर, देशेनदविशेषेऽब्धौ सिन्धुर्ना सरितिस्त्रियाम् |
| ,, | निर्विन्ध्या | | ,, ,, | ,, | भोपालजिला, मेघदूतमें । |
| ,, | वेत्रवती (वेतवा) | | विन्ध्य | ,, | सागर ,, ,, "वेत्रवत्याश्चलोर्मि" |
| ,, | पार्वती (पारवती) | | ,, | ,, | भोपाल जि० |
| ,, | दशार्णा | | ,, | | सागर जि० मेघदूत में |
| | मन्दाकिनी | | चित्रकूट | | चित्रकूटमें, रघुवंश स० १३ |

| | | | | | |
|---|---|---|---|---|---|
| २७ | शोणभद्र | | मेकल | गङ्गामें दानापुरके पास | रीवाँ, दानापुर, रघुवंश स० ७ मुद्राराक्षस |
| | कर्मनाशा | | विन्ध्यसे | आरा जिला, गङ्गामें | पुराण धर्मशास्त्रोंमें (न्यायमुक्तावली में । काशी, मगध की सीमा |
| २८ | पुनः पुना | | गया पर्वत | गंगामें पटना जि. | गयामाहात्म्य में |
| ” | फल्गु | | ” ” | गङ्गाजीमें पटना | ” ” |
| ” | दामोदर ( ० ) | | वैद्यनाथ | समुद्रमें, वंगमें, | वङ्गदेश में बहती है । |
| २७ | कपिशा (कसाई) | | ” | ” | उत्कलवङ्गकी सीमा है। रघु० सर्ग ४ |
| ” | ब्राह्मी, (ब्राह्मणी) | | पारसनाथसे | वङ्गकी खाड़ीमें | महानदी के उत्तरभागमें है । इस के उत्तर में वैतरणी है । |
| ” | महानदी | ५२० | मध्यप्रदेश. मेकलपर्वत | ” ” | मध्यप्रदेश, और उत्कलमें बहती है कटकनगर (सम्भलपुर सोनपुर) |
| | ढेलनदी | | वस्तर से | महानदीमें उत्कलमें | |
| | वैतरणी | | | समुद्रमें ब्राह्मीके पास | |
| | भद्रशीला | | सक्षिगोपाल | ” | कपिशासे—भद्रशीलातक उत्कल देशकी नदी हैं। सत्यनारायण |
| | “हुगली”, | | गङ्गाकीधारा | वङ्गकी खाड़ी | कलकत्ता |
| २३ | ब्रह्मपुत्र | १८०० | कैलासपर्वत, मानसरोवर | ” ” | आसामदेश इसके दक्षिण और पूर्व, रघु० स० ४ |

| पृ० | नदी नाम | मील | उत्पत्तिस्थान | सङ्गम (पतनस्थान) | प्रसिद्धनगरदेशादि वा.ग्रन्थप्रसिद्धि |
|---|---|---|---|---|---|
| २४ | कौशिकी | | गौरीशिखर (नेपाल) | गङ्गाजीमें | पुरनियाँजिला इसके पूर्व है, मिथिलादेश पश्चिम है। |
| २५ | वाङ्मती | | नैपाल से | कौशिकीमें | वाङ्मती, विष्णुमती, नैपालसे मिलके मिथिला में पूर्वाभि मुख हैं |
| २७ | गण्डकी | | ,, ,, | गङ्गामें | छपरा, नैपालमें इसके तीरपर शालग्राम है, |
| | "गण्डक" | | ,, ,, | कौशिकीमें | मुजफ्फरपुर जिला में ६,७ मील तक इसमें सीप हैं |
| | "राप्ती" ( ० ० ) | ४०० | नेपाल पर्वत | सरयूमें बरहजके पास | गोरखपुर (संस्कृत) नामनिश्चय नहीं भया। |
| २५ | घर्घरनदः | २५० | धवलगिरि, नैपाल | सरयूमें | बहराईच बाराबंकी की सीमा में ( निर्णयसिन्धुः ) |
| ,, | सरयूनदी | १००० | सरयूमूल २६॥ अंश | गङ्गामें, छपरा जि० | बागीश्वर, पञ्चेश्वर, अयोध्या, |
| ,, | काली | १५० | हिमालय, दारम | पञ्चेश्वरमें, सरयू | इसकाली से, नैपाल राज्य गवर्नमेन्ट राज्य की सीमा होती है गौरी, धौली लिस्मापडो मानसके पास से आकर इसीमें मिलती हैं। |

सूचना—सरयू नदी और घर्घर नद ( घाघरा ) भिन्न हैं ध्यान रखियेगा।

| | | | | | |
|---|---|---|---|---|---|
| २५ | वासिष्ठी (रामगंगा) | १२० | जोहार हिमालय | सरयू. रामेश्वरमें | इसके सरयू के अन्तराल, परगना गङ्गावली कहा जाता हैं जि.अल्मोडा |
| ” | गोमती | ८००० | कूर्माचल (अल्मोडा) | काशीकेपूर्व, गङ्गामें | लखनऊ, जौनपुर, सुलतानपुर, |
| ” | रामगङ्गा | ३७५ | गोलादम (अल्मोडा) | कन्नौज, गङ्गामें | बांसबरेली, मुरादाबाद, |
| | मालिनी | | कोटद्वारा (गढवाल) | विजनौर ” | इसके तीरपर कण्वाश्रम है। “ शकुन्तला नाटक ” |
| | काली | ३७५ | मन्सूरी ( देहरादून ) | कन्नौज के पास गङ्गामें | गङ्गा जमुना की बीच की नदी है, छोटी नदी है। |
| | तमसा ( ढोंस ) | | आजमगढ़ | ... ...... | विन्ध्य से गङ्गा में बहनेवाली भी एक तमसा है, मिरजापुर से पश्चिम में। रघुवंश स.९ |
| | चित्रनदी ( गौल ) | | नैनीताल पर्वत | तराई भावर काठगोदाम | श्रीसूर्यचरित में १५ स. मार्कण्डेय पुण में। |
| २२ | सरस्वती | | शिमला ( हिमाल ) | मरुस्थलमें | कुरुदेश इसीके पासका कहाजाता है। कुरुक्षेत्र। रघु. मेघ, भागवत, |
| २२ | शतद्रुः ( सतलज ) | ९०० | मानसरोवरसे | चन्द्रभागामें भागलपुर | कोट,ठट्ठा,हैदराबाद, (सूर्यचरिते) |
| ” | विपाशा (व्यास) | २९० | जालन्धर ( कल्लू ) | शतद्रुमें हरापट्टम | फरीदपुर, भावपुर, पिशाचमोचनी भी इसका नाम है। |
| ” | इरावती ( रावी ) | ४८५ | चम्बलकी घाटीसे | चन्द्रभागा में मुल्तान के उत्तर | लाहौर, माण्टगोमरी |

| पृ० | नदीनाम | मील | उत्पत्तिस्थान | (सम्भेदः) पतनस्थान | तटपर प्रसिद्धनगरादि ग्रन्थ-प्रसिद्धः |
|---|---|---|---|---|---|
| २२ | चन्द्रभागा (चिनाव) | ७६५ | लादुल की घाटीसे | सिन्ध, मिट्ठनकोट | स्यालकोठ मुल्तान, झंग. |
| ,, | वितस्ता (झेलम) | ४६० | कश्मीर 'नीलकण्ठेश्वर | झंगके पास चंद्रभागामें | श्रीनगर, झेलम ( सूर्य चरित में ) |
| | सिन्धुनद (सिन्ध) | २००० | कैलासपर्वत | अरबसागर, नारायण सरसि | अटक, हजारा, देरह, इस्माईलखां, रोरी, सक्कर, मिट्ठन, |
| | कावुल (कम्बोज) | | हिन्दुकुश पर्वत | अटक के पास सिंध में | |
| | उध्य (उज्झ) | | जालन्धर पर्वत | | चम्पा जाने में मिलता है, तोयदा गम इवोध्यभिद्ययोः, इति रघुः । |
| | भिद्य (        ) | | | | नहीं मालुम है ( रघुमें— सूचना—सरस्वती से, ये सब, नदी पञ्जाब में हैं । |
| २७ | नर्मदा ( नर्वदा ) | ८०० | मेकल ( अमरकंटक ) मध्यप्रदेश में | खंभातकी खाड़ी सूरतके पास | भड़ोंच, मण्डला नरसिंहपुर, "सनर्मदारोधसि" स-५ रघुवंश शरावती, शर्करावर्त्ता, वञ्जरा, रेवा, आदि सहायक नहीं है । |
| | तापी ( तासी ) | ५०० | सतपुडा महादेव | अरब समुद्र | सुरतपुरा, नसीराबाद, "आषाढ-माहात्म्ये" |
| | अवटोदा(सावरमती) | | विन्ध्य, पश्चिमभाग | खंभातकी खाड़ी | बड़ोदा-राज्य(गुजरात) बुरहानपुर, |

| | | | | | |
|---|---|---|---|---|---|
| | लवणानदी (नोनी) | | अर्वलीके पश्चिम | कच्छकी खाड़ी | राजपूतानेकी नदी है गर्मीमें सूख जाती है । |
| २७ | वेनगङ्गा | | मेकल-पश्चिमभाग | गोदावरीमें, १९॥ | यह ठीक ८० या ५ देशान्तर रेखामें है। रामगिरि इसके सम्भेदके पास है |
| ३१ | गोदावरी | ९०० | त्र्यंबकेश्वर, पश्चिम | पूर्वसागर, (वंगखात) | नासिक, जनस्थान राजमहेन्द्री, "उत्तर रामचरित" |
| | वारिधारा (वार्धा) | | वारिधार पर्वतसे | गोदावरीमें | यह नदी विदर्भ ( वरार ) और मध्य प्रदेशकी सीमा है |
| ३३ | पयोष्णी ( पेन. ) | | पश्चिम पर्वत | ,, ,, | |
| ३१ | कृष्णा | ४७५ | पश्चिम पर्वतसे | महोदधि ( वङ्गखा ) | सितारा, करनूल, गन्तूर, मूसलीपट्टम्, |
| ,, | भीमरथी (भीमा) | | ,, ,, | कृष्णामें | सूचना— |
| ,, | तुङ्गभद्रा | | सह्याद्रिः | ,, ,, | कृष्णामें और भी नदी मिलती हैं |
| | वेदस्मृतिः (वेदावती) | | ,, ,, | ,, ,, | मूलमें देखो |
| ३२ | कावेरी | ४७५ | कवेर ( कुर्ग ) पर्वत | वङ्गखातमें | सिरङ्गापट्टम, तंजौर, त्रिचनापली इसीके पास चोल देश है |
| ,, | ताम्रपर्णी | | मलयपर्वत से | मनारकी खाड़ी | इसके सम्भेदमें मुक्ता उत्पन्न होते हैं । रघु० |
| ६० | मुरला | | मलय पश्चिमभाग | महासागर | केरलदेशमें (ट्रावन्कोर) रघुवंशे स०४ |

| पृ० | नदीनाम | मील | उत्पत्तिस्थन | सम्भेदः (पतनस्थान) | तटपर प्रसिद्धनगरादि ग्रन्थ-प्रसिद्धः |
|---|---|---|---|---|---|
| ३१ | ऋषिकुल्या | | महेन्द्र पर्वत | वङ्गकी खाड़ी | कलिङ्ग देशमें हैं कलिङ्ग और उत्कलकी सीमा है |
| | सीताङ्गा (सीताङ्) | | यमोथिनके जिले में पर्वत से | मर्तवानकी खाड़ी | ये चार नदियां ब्रह्मदेशकी हैं । सूचना-सीता-चीनमें, अलकनन्दा-भारतमें, चक्षुः-केतुमालमें भद्रा-उत्तर कुरमें, गङ्गाकी धारा हैं । |
| | ऐरावती | | चीनके दक्षिण | ,, ,, | |
| | सालविन | | तिब्बतसे | ,, ,, | |
| | कलदान | | आरकान | वङ्ग खात | |

सूचना—गढवाल, मालव, दशार्ण, मगध, वङ्ग उत्कल, आसाम, मिथिला, उत्तर—कोसल, मानस—खण्ड रूहेल खण्ड, फिर गढवाल, पञ्जाब, गुजरात. दक्षिण, इस क्रम से, देखिये ।

मुरला—दूसरी नासिक के पास है गोदावरी में मिलती है । उत्तर राम चरित में ।

विज्ञप्तिः—सज्जनों से प्रार्थना है कि मैंने यथा शक्ति "शास्त्र सम्मत" भूगोल खगोल देशोंके नाम, पर्वतों के नाम, और नदियों का वर्णन, आधुनिक गोलसे सप्रमाण मिलाया है । जो कुछ न्यूनता रहीहो, आपलोग अपनी २ सम्मति देकर पूर्ण करने का यत्न करें । द्वितीय भाग में मुद्रित कर दिया जाय ।

आपका—प्रो० हि० वि० वि० काशी पं० तारादत्त पन्तः सा० आचार्यः
सार्वभौम कार्यालय काशी ।

# अथ तृतीयोऽध्यायः ।



अथाऽधुनिकरीत्या भूविगः क्रियते ॥ १ ॥ द्विविधो भूगोलः ॥ २ ॥ लङ्कापृष्ठः, सिद्धपुरपृष्ठश्चेति ॥३॥ तत्र लङ्कापृष्ठोऽस्मद्दिनावच्छिन्नः, पूर्वीयगोलार्द्ध,-इत्युच्यते ॥ ४ ॥ सिद्धपुरपृष्ठोऽस्मद्रात्र्यवच्छिन्नः पश्चिमीय-गोलार्द्ध-इत्युच्यते ॥ ५ ॥ अयमेव, अमरिका, ॥ ६ ॥ उत्तरामरिका, दक्षिणामरिका चेति-द्विधा ॥७॥ तत्रोत्तराऽमरिका,—उत्तराभिमुख—सुप्त—गोलाङ्गूलाकारा ॥८॥ वायव्यायता ॥९॥ यमकोटि-परिधौ-अशीत्यक्षांशेषु लङ्कापृष्ठगोलीयभूम्या मुखेन मिलिता ॥१०॥ पुच्छेन च सिद्धपुरात्पूर्वस्मिंस्त्रिंशद्देशान्तरेषु, दशस्वक्षांशेषूत्तरस्मिन्, दक्षिणामेरिकाद्वीपं स्पृशति ॥ ११ ॥ मध्यरेखातः पूर्वस्मिन् द्विपञ्चाशद् देशान्तरेषु ॥१२॥ पश्चिमतश्च द्विपञ्चाशद् देशान्तरेषु ॥ १३ ॥ अस्या उत्तरभागेऽशीत्यक्षांशेभ्यो नवत्यक्षांशपर्यन्तमायतः, गोलपरिधिसँल्लग्नो हिमाच्छादित-इलावृत-वर्षभागो 'ग्रीनूलेण्ड, इत्युच्यते ॥ १४ ॥ दक्षिणामेरिका,द्वीपस्तु सशुण्ड—करिमस्तकाकारः ॥१५॥ विषुवत उत्तरस्मिन् दशाक्षांशान् कुम्भेन स्पृशति ॥१६॥ दक्षिणतः पञ्चपञ्चाशांशान् करेण ॥ १७ ॥ भूमध्यरेखातः पूर्वस्मिन्, त्रिंशद्देशान्तरादारभ्य षट्सप्तति देशान्तरपर्यन्तं विस्तीर्णो मस्तके ॥ १८ ॥ करे तु चत्वारिंशत्तमे, एकस्मिन्नेव-देशान्तरे विस्तीर्णः ॥ १९ ॥ अत्रत्यौ जलवायू न रमणीयौ ॥ २० ॥ ज्वरादि-बाहुल्यमत एव ॥ २१ ॥ अरण्यबहुलोयंद्वीपः ॥ २२ ॥ उत्तरामेरिकाद्वीपस्तु रम्यक—हिरण्मयवर्षात्मको

यथार्थनामा ॥ २३ ॥ रम्यकम् गुरण्डचक्राधीनम् ॥ २४ ॥ हिरण्मयम् प्रजातन्त्रम् ॥ २५ ॥ भारतसमानसुखदम् ॥ २६ ॥

इति श्रीत्रिविक्रमीये गोलसूत्रे तृतीयाध्यायेऽमेरिकाह्वय पादः प्रथमः ॥

लङ्कापृष्ठगोले तु त्रयो महाद्वीपाः ॥ १ ॥ यूरोशिया, आफ्रिका, आष्ट्रेलियाचेति ॥ २ ॥ विषुवरेखायाः—उत्तरस्मिन्-यमकोटितः, रोमकपत्तनपर्यन्तं महामहाद्वीपो यूरोशिया इत्युच्यते ॥ ३ ॥ अस्याऽपि द्वौभागौ यूरोप, एशिया च ॥ ४ ॥ अनयो-र्विभाजको माल्यवान् वर्षपर्वतः ॥ ५ ॥ यूरोप एव केतुमाल वर्षम् ॥ ६ ॥ इदं पञ्चत्रिंशदक्षांशेभ्यः सप्ततिपर्यन्तम् ॥ ७ ॥ भूमध्यरेखातः पञ्चदश-पश्चिमदेशान्तरेभ्यः, समान्यतोऽष्टसप्तति देशान्तरपर्यन्तम् ॥ ८ ॥ अत्र रोमकपत्तनादुष्णाः कल्लोला वहन्तः केतुमालं कमनीयं कुर्वन्ति ॥ ९ ॥ एशियानामके भागे नवखण्डं पूर्वोक्तं भारतवर्षं, किन्नरवर्षं, हरिवर्षं, ञ्चेति क्रमशः—उत्तरोत्तरम् ॥ १० ॥ इलावृतार्द्धभागश्च सुमेरुसमीपे ॥ ११ ॥ पूर्वभागे भद्राश्ववर्षम्[१] ॥ १२ ॥

एवं सार्द्धत्रीणि वर्षाणि पश्चिमगोले, सार्द्धपञ्च यूरोशिया भागे—इति नववर्षात्मको जम्बूद्वीपः ॥१३॥ जम्बूद्वीपभूमिरुत्तर गोल एव ॥ १४ ॥ केवलं दक्षिणामेरिका स्वल्पैवदक्षिणगोले ॥ १५ ॥ विपर्यस्ता विच्छिन्ना चेति पौराणिकाः ॥ १६ ॥ आफ्रिका तु षोडश-पश्चिमदेशान्तरादारभ्य पञ्चाशीतिदेशान्तरपर्यन्तम् ॥ १७ ॥ रोमकपत्तनपर्यन्तमेवेति विद्धि ॥ १८ ॥ विषुवरेखाया-उत्तरस्मिन् केतुमालम् अवरञ्च स्पृशति ॥ १९ ॥ दक्षिणस्मिन् षट् त्रिंशदंशान् ॥२०॥ दक्षिणामेरिका तु विषुवत अर्वाक्प्राग्, रोमकपत्तनात्पूर्वस्मिन् ३०—६० देशान्तरेषु ॥२१॥

---

१ सिद्धान्तशिरोमणौ-अस्य गन्धमादनस्य च नामविपर्यासः । भागवतेन, वि० ।

आष्ट्रेलिया—अर्वाग्दशभिरक्षांशैर्विषुवत इत्याद्युक्तमेव ॥२२॥

इति श्री त्रिविक्रमीये गोलसूत्रे तृतीयाध्याये लङ्कापृष्ठपादो द्वितीयः ।

'राजोवाच'

उक्तस्त्वया भूमण्डलायामविशेषो यावदादित्यस्तपति यत्र-चासौ ज्योतिषां गणैश्चन्द्रमा सह दृश्यते ॥ १ ॥ तत्रापि प्रियव्रतरथचरण—परिखातैः सप्तभिः, सप्तसिन्धव उपक्लृप्ताः ॥ यत एतस्याः सप्तद्वीपविशेष विकल्पस्त्वया भगवन् खलु सूचितः ॥ एतदेवाऽखिलमहं मानतो लक्षणतश्च सर्वं विजिज्ञासामि ॥ २ ॥ भगवतो गुणमये स्थूलरूप आवेशितं मनो ह्यगुणेपि सूक्ष्मतम आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये क्षममावेशितुं तदु हैतद् गुरोऽर्हस्यनुवर्णयितुमिति ॥ ३ ॥

'ऋषिरुवाच'

न वै महाराज ! भगवतो मायागुणविभूतेः काष्ठां, मनसा वचसा वा ऽधिगन्तुमलं विबुधायुषाऽपि पुरुषस्तस्मात् प्राधान्ये नैव 'भूगोलक,विशेषं नामरूपमानलक्षणतो व्याख्यास्यामः ॥४॥ यो वा ऽयं 'जम्बूद्वीपः, कुवलय×कमलकोशाभ्यन्तरकोशो नियुत योजनविशालः, समवर्तुलो यथा पुष्करपत्रम् ॥ ५ ॥ यस्मिन्नव-वर्षाणि नवयोजन सहस्रायामान्यष्टभिर्मर्यादागिरिभिः सुविभक्ता-नि भवन्ति ॥ ६ ॥ एषांमध्ये इलावृतं नामाऽभ्यन्तरवर्षम् यस्य नाभ्यामवस्थितः सर्वतः सौवर्णः कुलगिरिराजो मेरुर्द्वीपायाम-समुन्नाहः कर्णिकाभूतः कुवलयकमलस्य, मूर्धनि द्वात्रिंशत्स-हस्रयोजन विततो मूले षोडशसहस्रं तावताऽन्तर्भूम्यां प्रविष्टः॥७॥ उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मय-कुरूणां वर्षाणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयो-

× कुवलयम् = पृथ्वीचक्रमेव कमलं - कमलोदरम् तस्मादि कोशो - आभ्यन्तर कोशः

द्विसहस्रं पृथक् एकैकशः पूर्वस्मात्पूर्वस्माद् उत्तरउत्तरोदशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति ॥८॥ एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रगायता यथा नीलादयः, अयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानां यथासङ्ख्यम् ॥९॥ तथैवेलावृतमपरेण, पूर्वेण, च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रं पप्रथतुः केतुमाल-भद्राश्वयोः सीमानं विदधाते ॥१०॥ भागवते स्क. ५ अ. १६

भूगोले केन्द्रस्थानान्याह भास्करः ।

लङ्का कुमध्ये यमकोटिरस्याः, प्राक् पश्चिमे रोमकपत्तनं च
अधस्ततः सिद्धपुरं सुमेरुः, सौम्येऽथ याम्ये वडवानलश्च ॥१७॥
कुवृत्तपादान्तरितानि तानि स्थानानि षड्गोलविदो वदन्ति
वसन्ति मेरौ सुरसिद्धसङ्घा, और्वे च सर्वे नरकाः सदैत्याः ॥१८॥

'दिग्व्यवस्थाञ्चाह'

लङ्का पुरेऽर्कस्य यदोदयःस्यात्तदा दिनार्धं यमकोटिपुर्यामधस्तदा सिद्धपुरे ऽस्तकालः स्याद्रोमके रात्रिदलं तदैव ॥४४॥
यत्रोदितोऽर्कः किल तत्र पूर्वा तत्राऽपरा यत्र गतः प्रतिष्ठाम्,
तन्मत्स्यतोऽन्ये च ततोऽखिलानामुदक्स्थितो मेरुरिति प्रसिद्धम् ४५

तत्र विशेषमप्याह

अथोज्जयिन्याः कुचतुर्थभागे प्राच्यां दिशि स्याद्यमकोटिरेव
ततश्च पश्चान्न भवेदवन्ती लङ्कैव तस्याः ककुभि प्रतीच्याम् ॥४६॥
तथैव सर्वत्र यतो हि यत्स्या स्प्राच्यां ततस्तन्न भवेत्प्रतीच्याम्
निरक्षदेशादितरत्र तस्मात्प्राचीप्रतीच्यौ च विचित्रसंस्थे ॥४७॥
यो यत्र तिष्ठत्यवनीं तलस्थामात्मानमस्या उपरिस्थितं च
स मन्यतेऽतः कुचतुर्थसंस्था मिथश्च ते तिर्यगिवामनन्ति ॥४८॥

इति गोलसूत्रे तृतीयाध्याये तृतीयः प्रामाण्य पादः ।

## विज्ञापन।

भगवद्विभूति ग्रन्थ माला में—रचित ग्रन्थ।

इस ग्रन्थमाला में समयोपयोगी, अभिनव, विषयक नूतन रचित अपूर्व ग्रन्थ छपते हैं।

इस ग्रन्थ माला के जो नित्य ग्राहक बनना चाहे उसके लिये प्रत्येक ग्रन्थ का आधा मूल्य किया जायगा।

इस में प्रति वर्ष दो पुस्तक मुद्रित हो रही हैं। जैसे—

| | | |
|---|---|---|
| श्रीसूर्य चरित ( ऋतुचरित ) गोलविषयक अपूर्व महाकाव्य | मूल्य | १।) |
| गोल विद्या—गोल सूत्र सं. हिन्दी अवश्य देखिये | ,, | ।=) |
| वर्णमाला संस्कृत और हिन्दी। | ,, | ॥) |
| यह वर्णमाला देखने लायक है। | ,, | =) |
| दशरथि—भरत चरितम् नाटकम् हि. टी. | ,, | १) |
| आर्या प्रवाहः ( पण्डित गुरुपरम्परा वर्णन ) | ,, | १) |

प्राप्तिस्थान—सुप्रभात कार्यालयः काशी।

,, सार्वभौम पुस्तकालय मु० भिखारीदास गली, काशी।

सूचना—'सार्वभौम' नामका 'अयन पत्र' दो वर्ष से प्रकाशित हो रहा है। वर्ष में दो बार निकलता है उत्तरायण, और दक्षिणायन, मूल्य, १ वार्षिक सालभर का वृत्तान्त भेजिये और पढ़िये कुल भूगोल, त्रिभुवन वृत्तान्त मालूम कीजियेगा।

पं० तारादत्तपन्त सा० आ०

पता—सार्वभौम

॥४७॥ व न्त ॥४८॥ पादः।